८३२. सम्पल्लाभफलं पुंसां सज्जनानां हि पोषणम्।
काकार्थफलनिम्बोऽपि श्लाघ्यते न हि चाम्रवत्॥

८३३. समदुःखसुखा एव बन्धवो ह्यत्र बान्धवाः।
दूता एव कृतान्तस्य द्वन्द्वकाले पराङ्मुखाः॥

८३४. जीवनात्तु पराधीनाज्जीवानां मरणं वरम्।
मृगेन्द्रस्य मृगेन्द्रत्वं वितीर्णं केन कानने॥

८३५. दुर्जनेऽपि हि सौजन्यं सुजनैर्यदि संगमः।

८३६. संसारोऽपि हि सारः स्याद् दम्पत्योरेककण्ठयोः।

८३७. अविवेकिजनानां हि सतां वाक्यमसङ्गतम्।

८३८. अनवद्या सती विद्या फलमूकाऽपि किं भवेत्।

८३९. सज्जनानां हि शैलीयं सकृतारम्भशालिता।

---

८३२. सज्जनों का पोषण पुरुषों की सम्पत्ति लाभ का (श्रेष्ठ) फल है। कौवे के लिए उपयोगी फल वाले नीम की प्रशंसा आम की भाँति नहीं होती।

८३३. दुःख-सुख में समान रहनेवाले बन्धु ही वास्तविक बान्धव हैं। जो विपत्ति के समय मुँह मोड़ें, वे यमदूत ही हैं।

८३४. पराधीन जीवन से तो मरना अच्छा। सिंह को वन में किसने राजा बनाया ?

८३५. सुजनों की संगति होने पर दुर्जन में भी सुजनता आ जाती है।

८३६. दम्पती के एक कण्ठ होने पर (असार) संसार भी सारपूर्ण हो जाता है।

८३७. विवेकरहित लोगों को सज्जनों की वाणी अर्थहीन लगती है।

८३८. निर्दोष विद्या क्या कभी निष्फल हो सकती है ?

८३९. अपने कार्य का [illegible] करना सज्जनों की रीति है।

८४०. विवेकभूषितानां हि भूषा दोषाय कल्पते।
८४१. प्रत्यक्षे च परोक्षे च सन्तो हि समवृत्तिकाः।

## प्रबोधचन्द्रोदयम्

८४२. प्रभवति मनसि विवेको
विदुषामपि शास्त्रसम्भवस्तावत्।
निपतन्ति दृष्टिविशिखा
यावन्नेन्दीवराक्षीणाम्।। १.११
८४३. गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः।
उत्पथप्रतिपन्नस्य परित्यागो विधीयते।। १.१२
८४४. प्रायः सुकृतिनामर्थे देवा यान्ति सहायताम्।
अपन्थानं तु गच्छन्तं सोदरोऽपि विमुञ्चति।। ४.७
८४५. निर्दहति कुलमशेषं ज्ञातीनां वैरसम्भवः क्रोधः। ५.१

---

८४०. विवेक से सुशोभित लोगों के लिए अपने को ऊपर से सजाना दोषावह है।
८४१. सज्जन प्रत्यक्ष और परोक्ष में समान व्यवहार करते हैं?
८४२. शास्त्रों के द्वारा प्रदत्त विवेक विद्वानों के मन में तभी तक प्रभाव दिखलाता है, जब तक कमलनयनी के नेत्रवाणों का वह शिकार नहीं बनता।
८४३. अभिमान करनेवाले, कार्य और अकार्य को न जाननेवाले तथा कुपथ पर चलने वाले गुरु का भी परित्याग कर देना चाहिए।
८४४. साधारणतः अच्छे काम करने वालों के लिये देवता भी सहायता करते हैं। कुपथ पर चलनेवाले को सोदर (भाई) भी छोड़ देता है।
८४५. परिचित लोगों के वैर से उत्पन्न होने वाला क्रोध सारे कुल का नाश कर देता है।

८४६. समानान्वयजातानां परस्परविरोधिनां।
परैः प्रत्यभिभूतानां प्रसूते सङ्गतिः श्रियम्।। ५.८

## राजतरंगिणी

८४७. वन्द्यः कोऽपि सुधास्यन्दास्कन्दी स सुकवेर्गुणः।
येनायाति यशःकायः स्थैर्यं स्वस्य परस्य च।। १.३

८४८. तपोविभूतयोऽचिन्त्या द्विजानामुग्रतेजसाम्।। १.१६०

८४९. धन्यास्ते पृथिवीपालाः सुखं ये निशि शेरते।
पौरान् पुत्रानिव पुरः सर्वतो वीक्ष्य निर्वृतान्।। २.४२

८५०. खिन्नस्य हि विपर्येति तत्त्वज्ञस्यापि शेमुषी।। ३.२०३

८५१. महान्तो ह्यर्थिताः स्वल्पं फलन्त्यल्पेतरत्स्वयम्। ३.२७६

८५२. नाभिमानः शुभार्थिनाम्। ४.७४

---

८४६. समान वंश में उत्पन्न, परस्पर विरोधी और शत्रुओं के द्वारा दबाये हुए लोगों की संगति अभ्युदय के लिए होती है।

८४७. अमृत के प्रवाह से बढ़कर सुकवि का वह गुण वन्द्य है, जिससे अपना और दूसरे का यशःशरीर अमर हो जाता है।

८४८. अत्यन्त तेजस्वी ब्राह्मणों की तपोविभूति अचिन्त्य होती है।

८४९. वे राजा धन्य हैं, जो पुत्रों के समान पुरवासियों को अपने सामने पूर्ण सुखी देखकर रात में सुख से सोते हैं।

८५०. तत्वज्ञ की भी बुद्धि खिन्न होने पर ठीक नहीं काम करती।

८५१. महापुरुष थोड़ा माँगने पर स्वयं बहुत दे देते हैं।

८५२. शुभ चाहने वालों को अभिमान नहीं होता।

८५३. नादातृगृहजो लुब्धो नानीर्ष्यो नित्यदुःखितः।
नास्त्रीजितः सर्वहास्यो नावृद्धः स्निग्धभाषितः॥ ४.९१

८५४. वाग्मिनां कस्य सामर्थ्यं परिपन्थयितुं वचः॥ ४.२६१

८५५. द्वेषादिवैकृतवतः प्रतिभासतेऽन्यो
मिथ्यैव चित्रमधिको विशदात्मनोऽपि।
चन्द्रादि पश्यति पुरो द्विगुणं प्रकृत्या
तेजोमयं तिमिरदोषहतं हि चक्षुः॥ ४.३१४

८५६. अम्भोजानि घनाघनव्यवहितोऽप्युल्लाघयत्यंशुमान्
दूरस्थोऽपि पयोधरोऽतिशिशिरस्पर्शं करोत्यातपम्।
शक्तिः काप्यपरीक्षिताऽस्ति महतां स्वैरं दविष्ठान्यहो
यन्माहात्म्यवशेन यान्ति घटनां कार्याणि निर्यन्त्रणाम्॥
४.३६५

---

८५३. जो संग्रह करनेवाले घर में उत्पन्न है, वह लोभी होगा। जो नित्य दुःखी है, वही ईर्ष्यालु होगा। जो स्त्री के वश में है, वह सबके द्वारा हँसा जायेगा। वृद्ध के अतिरिक्त स्निग्ध भाषण करनेवाला नहीं होता।

८५४. जिनकी वाणी सिद्ध है, उनकी बात कौन टाल सकता है?

८५५. द्वेषादि विकारों से ग्रस्त विशदात्मा को भी कोई विशेष व्यक्ति मिथ्या ही विचित्र प्रतीत होता है। स्वभावतः तेजोमय चक्षु अन्धकार के दोष से हत होने पर एक चन्द्रमा को दो देखने लगता है।

८५६. घने बादलों से ढका हुआ भी सूर्य कमलों को खिला देता है। दूर होने पर भी बादल धूप को अत्यन्त शिशिर स्पर्शवाले बना देते हैं। महापुरुषों में कोई अज्ञात छिपी हुई शक्ति होती है, जिसकी महिमा के प्रभाव से दूर होने पर कार्य निर्बाध होकर संयोजित हो जाते हैं।

८५७. अकार्याण्यपि पर्याप्य कृत्वाऽपि वृजिनार्जनम्।
विधीयते हितं यस्य स देहः कस्य सुस्थिरः॥ ४.३८३

८५८. ह्यः पश्यद्भिरकारणस्मितसितं पाथोजकोशाकृति
श्मश्रूद्भेदकठोरमद्य रभसादुत्तप्तताम्रप्रभम्।
प्रातर्जीर्णविलक्षकेशविकृतं वृद्धाजशीर्षोपमम्
वक्त्रं निः परिहस्यते ध्रुवमिदं भूतैश्चिरस्थायुभिः॥ ३.३८६

८५९. दैवस्याम्बुमुचश्च नास्ति नियमः कोप्यानुकूल्यं प्रति
व्यञ्जन्यः प्रियमुत्कटं घटयते जन्तोः क्षणादप्रियम्।
क्षिप्रं दीर्घनिदाघवासरविपत्संतापनिर्वापणम्
प्रादुष्कृत्य वनस्पतेः प्रकुरुते विद्युद्विसर्गं च यः॥ ४.५४५

---

८५७. बुरे काम करके भी और पाप कमा कर भी जिसका हित किया जाता है, वह शरीर भी किसका स्थिर रहा?

८५८. कल तो अकारण हास्य से प्रसन्न और कमल-कोशकी आकृति वाला मुख था, आज सहसा तपाते हुए ताँबे के समान कठोर दाढी उस पर निकल पड़ी, कल सवेरे ही बूढ़े, कुरूप, केश के विकार से विकृत बूढ़े बकरे के सिर के समान उस मुख को देखते हुए स्थविर विद्वानों के द्वारा अवश्य ही हँसी नहीं रोकी जाती।

८५९. दैव और बादल का अनुकूल रहने के विषय में कोई ठिकाना नहीं रहता। दैव बहुत अधिक प्रिय दिखाते हुए प्राणी का महान् अनर्थ दूसरे ही क्षण कर देता है, इधर बादल चिरकालीन ग्रीष्म के दिनों की विपत्तिपूर्ण गर्मी को मिटाते हुए ही विजली को गिराते हुए वनस्पति को जला भी देता है।

८६०. स नास्ति कश्चित् प्रथमं यः प्रदर्श्यानुकूलताम्
सन्ताप्यते न चरमं नीचप्रीत्येव नानया ॥ ५.७

८६१. अयमवसर उपकृतये प्रकृतिचला यावदस्तिसम्पदियम्
विपदि सदाभ्युदयिन्यां पुनरुपकर्तुं कुतोऽवसरः ॥ ५.३६

८६२. यत्संग्रहो रत्नमहौषधीनां करोति सर्वव्यसनावसानम्।
त्यागेन तद्यस्य भवेन्नमोऽस्तु चित्रप्रभावाय धनाय तस्मै ॥
६.२२७

८६३. कुलिशं सर्वलोहानामम्भसां शैलसेतवः ।
अभेद्याः प्रतिभाव्यन्ते न किंचिदसतां पुनः ॥ ६.२७३

८६४. ये बालादपि संमूढा प्राज्ञाः सुरगुरोरपि।
तेषां न विद्मः के तावन्निर्माणपरिमाणवः ॥ ६.२७४

८६५. प्रत्यासन्नविनाशानामुपदेशो निरर्थकः ॥ ७.५५

---

८६०. ऐसा पुरुष तो हुआ ही नहीं, जिसको नीच लोगों की मैत्री की भाँति पहले अनुकूलता दिखाकर पीछे (लक्ष्मी ने) जलाया न हो।

८६१. यह उपकार का अवसर है, जब तक स्वभावतः चंचल सम्पत्ति मेरे पास है। विपत्ति के सदा बढ़ते रहने पर फिर उपकार का कहाँ अवसर ?

८६२. रत्न और महौषधियों का संग्रह सभी विपत्तियों को दूर कर देता है किन्तु जिस धन का त्याग ही यह सब कर दिखाता है, उस विचित्र प्रभाववाले धन को नमस्कार।

८६३. वज्र सभी लोहों को और पानी पत्थर के बाँधों को तोड़ देने में भले असमर्थ हों, पर दुर्जनों के लिए कुछ भी दुर्भेद्य नहीं होता।

८६४. बालकों से भी बढ़कर जो अबोध हैं और बृहस्पति से भी बढ़कर बुद्धिमान् हैं, उनके विषय में नहीं जानते कि उनके निर्माण-परमाणु क्या हैं ?



८६५. जिनका विनाश निकट हो, उनको उपदेश व्यर्थ ही रहते हैं।

८६६. परायत्ततया चित्तं पशोरप्युपतप्यते। ७.७२

८६७. पापिनामपि हन्तेयं काऽपि सत्कर्मवासना। ७.१२१

८६८. भाग्याम्बुवाहतडितो निविडाः कस्य सम्पदः। ७.२०५

८६९. भाग्याधीनं धनं ध्यात्वा मुधा मुग्धधियामसौ
कुलविक्रमयोर्दर्पो मिथ्यैव पृथुतां प्रति॥ ७.२०६

८७०. भाग्यप्रभावे निःसारे सुखमेकान्ततः कुतः। ७.२२६

८७१. नाभिमानपरित्यागः कर्तुं शक्यो मुनेरपि। ७.२३८

८७२. किं नाभ्येति विपर्ययं विगलने शीलस्य चिन्तामणेः।
७.३१६

८७३. वैरस्य रूपमेतद्धि भेदं याति मुहुर्मुहुः।
सन्धीयमानमपि यत्क्लिन्नाम्बरमिवाशयम्। ७.३८४

---

८६६. पराधीनता से तो पशुओं का भी चित्त उद्विग्न हो उठता है।
८६७. पापियों को भी, आश्चर्य है, सत्कर्म की कोई वासना होती ही है।
८६८. भाग्य रूपी बादल के बिजली के समान किसकी सम्पत्ति निश्चल है?
८६९. धन को भाग्याधीन समझकर मन्दमति लोगों का कुल और विक्रम सम्बन्धी दर्प अपने ऐश्वर्य के आधार पर हो सकता है।
८७०. भाग्य का प्रभाव निःसार होने पर कहाँ से केवल सुख होगा?
८७१. मुनियों के लिए भी अभिमान का परित्याग कर देना असम्भव है।
८७२. शील रूपी चिन्तामणि के नष्ट होने पर क्या-क्या नहीं विपरीत होता?
८७३. वैर का रूप कुछ ऐसा ही होता है कि वारंवार सन्धि करने पर भी भेद उत्पन्न हो जाता है जैसे पुराना कपड़ा वारंवार सीने पर भी फटा करता है।

८७४. मिथ्योपकरणं नारीर्गणयन्ति नृणां जनाः।
परिणामे तु नारीणां क्रीडोपकरणं नराः।। ७.४२४

८७५. दानोपभोगरहिताः काले क्लेशेन भूयसा।
अन्यार्थमर्थान् रक्षन्ति चित्रं लुब्धा महाशयाः।। ७.५०१

८७६. प्राणान् धारयते निपीय मरुतः शेते तमोऽन्धे बिले
संभोगे परदत्तमिच्छति पटं नग्नस्त्रपाशान्तये।
विस्तार्येति कदर्थतामहिरवत्यन्यस्य हेतोर्निधीन्
नान्यः कोऽपि परं परोपकृतिषु प्रौढोऽस्ति लुब्धं विना।। ७.५०२

८७७. अर्था भाग्योदये जन्तुं विशन्ति शतशः स्वयम्।
दिग्भ्योऽभ्युपेत्य सर्वाभ्यः सायं तरुमिवाण्डजाः।। ७.५०४

---

८७४. लोग झूठ ही स्त्री को पुरुष की सामग्री मानते हैं। अन्त में तो पुरुष ही नारी की क्रीड़ा की सामग्री बनते हैं।

८७५. लोभी महाशय दान और उपभोग से रहित होकर अत्यन्त कष्ट सहकर भी दूसरों के लिए धन की रक्षा करते हैं--यह विचित्र ही है।

८७६. हवा पीकर प्राण धारण करता है, अन्धकाराच्छन्न बिल में सोता है। भोग होने पर भी नंगा होकर लज्जा दूर करने के लिए दूसरों से दिये कपड़े चाहता है। इस तरह अपनी कदर्थता का विस्तार करके वह दूसरों के लिए साँप की भाँति धन की रक्षा करता है। लोभी को छोड़कर और कौन परोपकार करने में बढ़ा-चढ़ा है?

८७७. सैकड़ों मार्गों से सम्पत्तियाँ भाग्योदय होने पर आने लगती हैं जैसे सन्ध्या के सभी दिशाओं से उड़कर पक्षी वृक्ष पर आ जाते हैं।

८७८. प्रभुर्वीतक्षान्तिः सुहृदतिशठः स्त्री परुषवाक्
सुतो गर्वोन्नद्धः परिजन उदात्तप्रतिवचाः।
इयान्सोढुं शक्यो ननु हृदयदारी परिकरो
न तु श्रोतावज्ञालुलितनयनान्तं परिभवन्॥ ७.६१६

८७९. धत्ते श्रियं सृजति कीर्तिमघं लुनीते
मित्रत्वमानयति हन्त विरोधिनोऽपि।
यात्यध्वभिः प्रतिपदं सुमनोनुकूलैः
गोः कामधुक् कमिव नापहरत्यनर्थम्॥ ७.७८९

८८०. निर्दोषा सदा प्रेष्या स्वाम्यादेशानुपालने। ७.७९०

८८१. द्विपद्वीपिक्रव्यादुरगतुरगादिभ्रमकृतो
यथाऽस्यां भिद्यन्ते दिवि किल त एवाम्बुदलवाः।
तथा सौम्यक्रूरक्रमविकृतिभाजस्तनुभृतां
क्षणानां नानात्वान्ननु हृदि विकारोर्मय इमाः॥ ७.७९२

---

८७८. क्षमारहित स्वामी, अतिशय शठ मित्र, परुषवाणी वाली स्त्री, गर्वोन्नत पुत्र और उत्तर देनेवाला हृदयविदारक नौकर इनको सहा जा सकता है, किन्तु उपेक्षा से चंचल नेत्रकोण वाले अनादर करते हुए श्रोता असह्य हैं।

८७९. कामधेनु की भाँति वाणी श्री प्रदान करती है, यश का सर्जन करती है, पाप को काटती है, विरोधियों को भी मित्र बना देती है, अपने मन के अनुकूल मार्ग से प्रतिपद चलती है। वह किस अनर्थ को दूर नहीं कर देती ?

८८०. स्वामी के आदेश का पालन करने में प्रेष्य (सेवक) सदा निर्दोष होते हैं।

८८१. हाथी, चीते, चील, साँप और घोड़े की भ्रान्ति कराने वाले बादल के ही टुकड़े जैसे आकाश में टूट कर बनते रहते हैं, वैसे ही शरीर धारियों के हृदय में ये विचार की लहरें कभी सौम्य और कभी क्रूर के क्रमिक विकारवाली होकर नाना क्षणों में उठती हैं।

८८२. ग्रीष्मस्योष्मा व्रजति घनतां नूनमासन्नवृष्टेः
नैशं गाढीभवति तिमिरं सन्निकृष्टप्रभातम् ।
जन्तोरेवं प्रभवविभवस्फारसम्पत्प्रचारात्
निष्क्रामन्ती विपदुपचितोपद्रवोद्रेकमेति ।। ७.७९५

८८३. यत्त्राणाय विगण्यते विधिवशात्तेनैव नाशो भवेत् ।। ७.८०४

८८४. आसन्नाभ्रजलस्य दावविगमे विद्युद्भयं शाखिनो
नक्रास्याद् गलतश्च मज्जनमयी शङ्का भवेद्वारिधौ ।
भोक्तव्यस्य विधिः शुभस्य रभसात् स्वादुत्वनिष्पत्तये
जन्तोः सन्तनुते निराकृतभियो भीत्यन्तरोत्पादनम् ।।

८८५. स्थिराः कस्य विभूतयः । ७.८३३

८८६. योग्यः कृतापकारोऽपि कदाचिदुपयुज्यते ।
विहितागारदाहोऽग्निः शरणं भोज्यसिद्धये ।। ७.८९१

---

८८२. वृष्टि के निकट होने पर ग्रीष्म की उष्मा बढ़ जाती है, प्रभात के निकट होने पर रात्रि का अन्धकार गाढ़ा हो जाता है। वैसे ही ऐश्वर्यशालिनी सम्पत्तियों के आगमन के थोड़ा पहले जानेवाली विपत्ति उपद्रवों का विकराल रूप प्राणियों के लिए प्रस्तुत कर देती है।

८८३. जिससे परित्राण की कल्पना की जाती है, उसी से विधिवशात् नाश हो जाता है।

८८४. बरसात के निकट आ जाने से दावाग्नि के मिट जाने पर बिजली का भय वृक्षों को होता है। घड़ियाल के मुँह से निकलने पर समुद्र में डूबने की शंका होती है। विधि भोगने योग्य कल्याण के स्वाद की पूर्णता के लिए प्राणी को एक भय के दूर कर लेने के पश्चात् दूसरे भय का सामना करा देता है।

८८५. किसकी विभूतियाँ स्थिर हैं ?

८८६. अपकार करनेवाला भी कभी उपयोगी होता है। घर को जला देनेवाला अग्नि भोजन पकाने के लिए उपकारक होता ही है।

८८७. यदुल्लासाय संरम्भो धीरैर्विस्तार्यते महान्।
कृत्यं हिनस्ति तद्दैवमल्पेनैव च वस्तुना ॥ ७.९१७

८८८. उन्मीलनं तिग्मरुचिः प्रयत्नाद्येषां सहस्रेण करैः करोति।
उन्मूलयत्येककरेण तानि पद्मानि धाता कुपितो द्विपेन ॥
७.९१८

८८९. कुष्ठार्ताङ्घ्रियुगः शिखी बहुपदं गृह्णाति धावन्नहिं
भानुः पादसहस्रभाक् प्रतिपदं संचार्यतेऽनूरुणा।
वंच्यन्ते बलिनोऽपि यल्लघुबलैः सामर्थ्यहीनैश्च यत्
भ्राम्यन्ते परिपूर्णवृत्तय इदं दैवस्य लीलायितम् ॥ ७.९५९

८९०. अधिगतवतां लोके विश्वाद्भुतामपि सम्पदं
न खलु विरतिर्दुष्कर्मभ्यो धनार्जनकांक्षिणाम् ।
किमपि कमलावाप्त्यै पद्माकरोद्धृतिपातकम्
भजति कमलालीलावासो भवन्नपि हि द्विपः॥

---

८८७. जिसे बनाने के लिए धीर लोग महान् उपक्रम का विस्तार करते हैं, उस कृत्य को दैव छोटी घटना से उलट देता है।

८८८. जिन कमलों का विकास अपने सहस्र करों से प्रखराभ सूर्य करता है, उनका उन्मूलन हाथी के एक हाथ से ही कुपित विधाता करा देता है।

८८९. कोढ से रुग्ण दो पैरवाला मोर अनेक पद वाले साँप को पकड़ लेता है। सहस्र पाद वाला सूर्य बिना जाँघों वाले (अरुण) से चलाया जाता है। सामर्थ्यहीन कम बल वालों के द्वारा यदि बलवानों का पराभव होता है तो यह दैव की लीला ही है कि परिपूर्ण वृत्ति वाले नचाये जाते हैं।

८९०. सबके लिए आश्चर्यकरी सम्पत्ति को प्राप्त करने वाले धन कमाने की इच्छा करने वालों की दुष्कर्म से विरति नहीं होती। कमलालीलावास (लक्ष्मी की लीलाओं का वासस्थान) होते हुए भी हाथी कमलों की अधिक प्राप्ति के लिए उनको उखाड़ फेंकने का पाप क्या नहीं करता ?

८९१. अपरीक्ष्यादृतो भृत्यः स्वामिनामतिसंकटे।
करोति व्यसनापातमजात्योऽसिरिवाहवे॥ ७.११६०

८९२. उत्थाने पातयन् कांश्चित् पतने कांश्चिदुत्क्षिपन्।
वेधाः कन्दलयत्येव कन्दुकक्रीडितभ्रमम्॥ ७.११८८

८९३. पृथिव्यां वीरभोज्यायां क्रमो वा क्वोपयुज्यते।
वीरस्य च सहायोऽस्तु कः स्वबाहुद्वयात्परः॥ ७.१२८८

८९४. यथा चित्तं तथास्य स्यात्कायश्चेत् साहसक्षमः।
तदात्मनिरपेक्षस्य किं न सिद्धयेन्मनीषितम्॥ ७.१३२८

८९५. वैमुख्येन व्रजन्कुर्यात् सांमुख्यैरन्तरा विधिः।
प्रत्यागमभ्रमं सिंह इव व्यावृत्य वीक्षितः॥ ७.१३७०

---

८९१. बिना परीक्षा किया हुआ समादृत भृत्य स्वामी के ऊपर बड़ा संकट पड़ने पर वैसी ही विपत्ति का कारण होता है, जैसे युद्ध में घटिया तलवार।

८९२. उत्थान होने पर किन्हीं को गिराते हुए और पतन होने पर किन्हीं को उठाते हुए विधाता गेंद खेलने की भ्रान्ति प्रदर्शित करता है।

८९३. वीरों के भोगने योग्य पृथिवी पर (परम्परागत) क्रम का क्या उपयोग? अपने बाहुद्वय को छोड़कर वीरों का कौन सहायक है?

८९४. पुरुष के चित्त के समान ही यदि उसका शरीर साहस में समर्थ हो तो उस आत्मनिरपेक्ष पुरुष का कौन अभीष्ट सिद्ध न होगा?

८९५. विधाता विमुख होते हुए भी कभी-कभी संमुख होकर वैसा ही व्यवहार करता है, जैसे मुड़कर देखा गया हुआ सिंह लौटने की भ्रान्ति उत्पन्न करता है।

८९६. कालेन याति क्रिमितां महेन्द्रो महेन्द्रभावं क्रिमिरप्युपैति।
अयं प्रथीयानयमप्रतिष्ठ इत्येष निष्ठाऽनुचितोऽभिमानः ॥
७.१३९६

८९७. कार्यारम्भे फलोल्लासमालोक्य प्रायशो जनैः।
अनानुगुण्यगणनां कुर्वाणैर्न विगर्ह्यते॥ ७.१४२२

८९८. गच्छन् शरीरविच्छेदादपि भस्मावशेषताम्।
कर्पूरः सौरभेणेव जन्तुः ख्यात्याऽनुमीयते ॥ ७.१४३५

८९९. ख्यातिसंरक्षणं नाम जन्तोः कल्पान्तरस्थितिः।
वर्तने कीर्तिकायस्य सम्पूर्णाः परमाणवः॥ ७.१४३७

९००. तुङ्गावपातहठव्यसनी विधाता
स्वोत्पत्तिपद्मकुलजेऽपि सरोजषण्डे।
सङ्कोचिनि द्विजपतावपि शुद्धिवन्ध्ये
मातङ्गहस्तपतनैः कुरुतेऽवमानम्॥

---

८९६. समय आ जाने पर महेन्द्र कीड़े का और कीड़ा महेन्द्र का स्थान ग्रहण करता है। यह बड़ा है, यह प्रतिष्ठा-रहित है—यह निष्ठा अनुचित अभिमान है।

८९७. प्रायः कार्यारम्भ का फल-सम्पन्न होना देखकर अनौचित्य का विचार करनेवाले लोगों के द्वारा भी निन्दा नहीं की जाती।

८९८. शरीर छूटने के बाद राख हो जाने पर प्राणी अपनी ख्याति से वैसे ही जाना जाता है, जैसे कपूर अपनी सुगन्ध से।

८९९. यश का संरक्षण ही प्राणी की युगान्तर स्थिति है। कीर्ति-शरीर के व्यवहार में सम्पूर्ण परमाणु होते हैं।

९००. ऊँचे को नीचे गिराने के हठ का व्यसन करनेवाला विघाता अपने उत्पत्ति-स्थान कमल के कुल में जन्म लेनेवाले सरोज वन को शुद्धिरहित चन्द्रमा के द्वारा संकुचित किये जाने पर हाथी के सूंड़ के प्रहार से तिरस्कृत करता है।

९०१. लक्ष्मीतडिल्लता कीर्तिबलाका शौर्यगर्जितम्।
प्रतापशक्रचापं च भागधेयाम्बुदानुगम्॥ ७.१४५५

९०२. लोकैकचक्षुषि गते परलोकमर्के
लोकः स्वपित्यखिल एव सुखं गृहेषु।
कोऽन्यो विचिन्तयितुमर्हति विश्वमेतत्
तिष्ठेन्मया विरहमेत्य कथं किलेति॥ ७.१६८५

९०३. गोप्यं रहस्यभणितमत्यल्पहृदयातिथि।
अमृतं पारदमिव नाल्पसत्त्वैः सुदुर्जरम्॥ ७.१६९०

९०४. नादौ किञ्चिद्भवति नियतं यच्च पश्चान्न किञ्चित्
मध्येऽकस्मात् सपदि घटयन् सौस्थ्यदौस्थ्यानुरोधम्।
निःशीर्षाङ्घ्रिर्नट इव मुहुः कोपि जन्तुर्नटित्वा
नो जानीमो भवजवनिकान्तर्हितः क्व प्रयाति॥ ७.१७३१

---

९०१. लक्ष्मी रूपी बिजली, कीर्तिरूपी बलाका, शौर्यरूपी गर्जन और प्रतापरूपी इन्द्र धनुष भाग्यरूपी बादल का ही अनुसरण करते हैं।

९०२. संसार के अद्वितीय नेत्र सूर्य के परलोक में जाने पर अखिल लोक घर में सुखपूर्वक सोता है। फिर कौन विचार करे कि मेरा विरह होने पर यह संसार किस प्रकार रहेगा ?

९०३. रहस्य में कही हुई गोपनीय बात को अपने छोटे हृदय का अतिथि बनाकर अल्प सत्त्व वाले लोग वैसे ही नहीं पचा पाते, जैसे अमर बनाने वाले पारद को दुर्बल।

९०४. पहले क्या था—कुछ भी निश्चित नहीं। फिर क्या होगा—वह भी नियत नहीं। बीच (जीवन-काल) में अकस्मात् स्वास्थ्य और रोग के अनुसार कोई प्राणी बिना सिर-पैर के अभिनेता की भाँति नाटक करके संसार की जवनिका से अन्तर्हित होकर कहाँ चला जाता है—हम नहीं जानते।

९०५. जिघांसवः पापकामाः परस्वादायिनश्च ताः।
रक्षांस्यधिकृता नाम तेभ्यो रक्षेदिमाः प्रजाः॥ ८.८६

९०६. प्रबोधाधायिनो द्वेष्टि नियतिप्रणयी भवन्।
तपात्ययाहनिद्रान्त इव जन्तुर्गतस्मृतिः॥ ८.३०२

९०७. न भवेत् पविपातेऽपि प्रलयः समयं विना।
प्रसूनमप्यसून्हन्ति जन्तोः प्राप्तावधेः पुनः॥ ८.५३१

९०८. मानोन्नतास्तु विहितस्तुतयः कृतज्ञैः
त्यक्त्वाऽप्यसून् परहितं घटयन्ति सन्तः॥ ८.६९१

९०९. क्लैव्यकृत् भयमापाते मध्यपाते न तादृशम्।
करक्षिप्तं यथा शीतं मज्जने न तथा पयः॥ ८.१०९७

९१०. धिग् राज्यं यत्कृते पुत्राः पितरश्चेतरेतरम्॥
शङ्कमाना न कुत्रापि सुखं रात्रिषु शेरते॥

---

९०५. मारने की इच्छा रखने वाले पापकामी, दूसरे के धन को हड़पने वाले उन लोगों से प्रजा की रक्षा करनी चाहिए, जो राक्षसों की सवारी बन चुके हैं।

९०६. नियति (भाग्य) का प्रणयी होने पर पुरुष समझाने वालों से द्वेष करता है, जैसे जाड़े के दिन में सोया हुआ मनुष्य स्मृति खो बैठता है।

९०७. वज्र गिरने पर भी मृत्यु नहीं होती, यदि समय न हो। अवधि आ जाने पर फूल भी प्राण ले लेते हैं।

९०८. मानोन्नत सन्त लोग कृतज्ञ जनों के द्वारा स्तुति किये जाने पर प्राण छोड़कर भी परोपकार करते हैं।

९०९. आरम्भ में भय साहस रहित बना देने वाला होता है, बीच में वैसा नहीं होता। हाथ से छूने में जल जितना शीतल होता है, उतना नहाने में नहीं।

९१०. उस राज्य को धिक्कार, जिसके लिए पिता-पुत्र परस्पर डरते हुए कहीं भी रात में सुख से नहीं सोते।

९११. वैधेयैः स्वार्थलोभान्धैर्यद्वानर्थसमागमः।
सरघोपद्रवः क्षौद्रलुब्धैरिव न चिन्त्यते॥ ८.१२५८

९१२. शालीन् पलालपुरुषोऽवति यः कृशानु--
दग्धाननश्चटकपेटकभीतिदानैः।
त्रातुं स काननतरून् विहितो विदध्यात्
किं तत्र भंजनकृतां वनकुंजराणाम्॥ ८.१४९५

९१३. मुक्ता इमा इति जलं नलिनेषु लीनम्।
ज्ञातृत्वमेतदिति जाड्यमिनेषु लग्नम्।
यज्ज्ञायते किमपि हन्त विमोहिनी सा
शक्तिः श्रियः स्फुरति कापि तदाश्रयायाः॥ ८.२०२६

९१४. अनुबध्नाति भव्यानामुदयेऽभ्युदयान्तरम्॥ ८.२२७५

---

९११. स्वार्थ के लोभ से अन्धे मूर्खों के द्वारा अनर्थ का समागम वैसे ही नहीं विचारा जाता जैसे मधु के लोभी के द्वारा मधुमक्खियों का आक्रमण।

९१२. पुआल का पुरुष, जिसका मुँह अग्नि से जला होता है, शालि-धान की रक्षा चपेटा और घूँसे के भय को प्रस्तुत करके अवश्य ही कर लेता है, पर क्या वह वन के वृक्षों को तोड़-फोड़ करने-वाले वन्य हाथियों से भी बचाने में समर्थ होता है।

९१३. नलिनी पर पड़ा जल, मुक्ता है--यह भ्रम उत्पन्न करता है। यही ज्ञानान्धकार प्रभुओं के सम्बन्ध में भी होता है। ऐसा प्रतीत होता है कि वह कोई लक्ष्मी की विमोहिनी शक्ति है, जो सबकी भ्रान्ति का कारण बनती है।



९१४. भव्य लोगों के उदय होने पर दूसरे अभ्युदय भी आते ही हैं।

११५. नायाति वाडवशिखिक्वथनेन तापम्
शैत्यं हिमाद्रिपयसा विशता न चाब्धिः।
कश्चिद् गभीरमनसां सततं विषाद-
काले प्रमोदसमये च समोऽनुभावः॥ ८.२६६६

११६. अवल्लि कुंकुमं पुष्पमपुष्पं क्षीरिणः फलम्।
अकालपर्ययापेक्षं वैराग्यं वा महात्मनाम्॥ ८.३०७८

११७. अम्भोपि प्रवहत्स्वभावमशनैराश्यानमश्मायते
ग्रावाम्भः स्रवति द्रवत्वमुदितोद्रेकेषु चावेयुषः।
कालस्यास्खलितप्रभावरभसं भाति प्रभुत्वेऽद्भुते
कस्यामुत्र विधातृशक्तिघटिते मार्गे निसर्गः स्थिरः॥ ८.३४०६

---

११५. वडवानल की लपटों से समुद्र उबल नहीं पड़ता और न हिमालय के जल के आने से शीतल हो जाता है। गम्भीर मानसवालों का मानसिक सन्तुलन सदा समान रहता है, चाहे विषाद का समय हो या प्रमोद का।

११६. विना वल्लरी के ही केसर में फूल उत्पन्न होता है। खिरनी का फल बिना फूल के ही होता है। महात्माओं का वैराग्य भी समय के परिवर्तन की अपेक्षा नहीं रखता।

११७. बहनेवाला पानी ही वज्र और कीचड़ ही पत्थर बन जाते हैं। पत्थर भी पानी बनकर बहने लगता है, बहाव अतिशयता प्राप्त कर लेता है। अद्भुत प्रभुत्व होने के कारण काल की अचल शक्ति की प्रखरता विराजमान है। किसकी सृष्टि स्थिर है जब यहाँ विधाता की शक्ति के द्वारा (सबको चंचल रखने का) मार्ग बनाया जा चुका है?

## नैषधीयचरितम्

९१८. त्यजन्त्यसून्शर्म च मानिनो वरं
त्यजन्ति न त्वेकमयाचितव्रतम्॥ १.५०

९१९. अचिरादुपकर्तुराचरेदथवात्मौपयिकीमुपक्रियाम्।
पृथुरित्थमथाणुरस्तु सा न विशेषे विदुषामिह ग्रहः॥ २.१४

९२०. ब्रुवते हि फलेन साधवो न तु कण्ठेन निजोपयोगिताम्।
२.४८

९२१. धनिनामितरः सतां पुनर्गुणवत्सन्निधिरेव सन्निधिः।
२.५३

९२२. कार्यं निदानाद्धि गुणानधीते। ३.१७

९२३. सन्दर्भ्यते दर्भगुणेन मल्लीमाला न मृद्वी भृशकर्कशेन।
३.४९

---

९१८. मानी लोग प्राण और सुख भले ही छोड़ दें किन्तु वे याचना न करने का व्रत नहीं छोड़ते।

९१९. अथवा अपने उपाय से शीघ्र ही उपकारी का उपकार करना चाहिए। वह उपकार बड़ा है अथवा छोटा—इस विशेष में विद्वान् नहीं पड़ते।

९२०. सज्जन अपनी उपयोगिता फल से प्रकट करते हैं, वाणी से नहीं।

९२१. धनियों की बात दूसरी हो, पर सज्जनों के लिये गुणवानों का समागम ही सच्ची निधि है।

९२२. कार्य अपने कारण से गुण ग्रहण करता है।

९२३. चमेली की मृदु माला अत्यन्त कर्कश कुश की रस्सी में थोड़े पिरोई जाती है।

१२४. झटिति पराशयवेदिनो हि विज्ञाः। ४.११८

१२५. साधने हि नियमोऽन्यजनानां
योगिनां तु तपसाऽखिलसिद्धिः॥ ५.३

१२६. कर्म कः स्वकृतमत्र न भुंक्ते। ५.१६

१२७. तेन न श्रियमिमां बहुमन्ये स्वोदरैकभृतिकार्यकदर्याम्। ५.१६

१२८. उत्तरोत्तरशुभो हि विभूनां कोऽपि मंजुलतमः क्रमवादः। ५.३७

१२९. याचमानजनमानसवृत्तेः पूरणाय बत जन्म न यस्य।
तेन भूमिरतिभारवतीयं न द्रुमैर्न गिरिभिर्न समुद्रैः॥ ५.८८

१३०. आर्जवं हि कुटिलेषु न नीतिः॥ ५.१०३

१३१. दुर्जया हि विषया विदुषामपि। ५.१०९

१३२. स्वतः सतां ह्रीः परतोऽतिगुर्वी। ६.२२

---

१२४. विज्ञ शीघ्र ही दूसरे का आशय समझ लेते हैं।

१२५. साधारण लोगों को साधन की आवश्यकता होती है। योगियों के तो तप से ही सभी काम पूरे होते हैं।

१२६. यहाँ कौन अपने किये का फल नहीं भोगता ?

१२७. मैं इस लक्ष्मी को बहुत नहीं मानता, जो केवल मेरा पेट भरने के लिए प्रयुक्त होने के कारण निन्दित है।

१२८. महापुरुषों की मनोरम बातचीत उत्तरोत्तर अच्छी होती जाती है।

१२९. जिसका जन्म याचक लोगों के मनोरथ पूर्ण करने के लिये नहीं होता, उससे यह पृथ्वी बोझिल हो उठती है, वृक्षों, पर्वतों और समुद्रों से बोझिल नहीं होती।

१३०. कुटिल पुरुषों के साथ सीधा व्यवहार नीति नहीं है।

१३१. विद्वानों के द्वारा भी विषय कठिनाई से जीतने के योग्य हैं।

१३२. सज्जनों को दूसरे की अपेक्षा अपने से अधिक लज्जा होती है।

९३३. वर्षेषु यद्भारतमार्यधुर्याः स्तुवन्ति गार्हस्थ्यमिवाश्रमेषु॥ ६.९७

९३४. महाजनाचारपरम्परेदृशी स्वनाम नामाददते न साधवः।
९.१३

९३५. मृणालतन्तुच्छिदुरा सती स्थिति-
लवादपि त्रुटयति चापलात् किल॥ ९.३१

९३६. चकास्ति योग्येन हि योग्यसंगमः। ९.५६

९३७. जनानने कः करमर्पयिष्यति। ९.१२५

९३८. न वस्तु दैवस्वरसाद्विनश्वरम्
सुरेश्वरोऽपि प्रतिकर्तुमीश्वरः॥ ९.१२६

९३९. सतां हि चेतः शुचितात्मसाक्षिका। ९.१२९

९४०. उदेति दोषादपि दोषलाघवं कृशत्वमज्ञानवशादिवैनसः॥
९.१३२

---

९३३. देशों में भारत की और आश्रमों में गार्हस्थ्य की प्रशंसा श्रेष्ठ लोग करते हैं।

९३४. सज्जन अपना नाम नहीं लेते यह श्रेष्ठ लोगों की आचार-परम्परा है।

९३५. सती की मर्यादा मृणाल-तन्तु के समान है, जो थोड़ी चपलता से भी टूट जाती है।

९३६. योग्य व्यक्ति के साथ ही योग्य का साथ होना शोभा पाता है।

९३७. लोगों का मुँह कौन बन्द करेगा।

९३८. दैव की इच्छा से नष्ट होते हुए को देवराज भी नहीं रोक सकता।

९३९. सज्जनों का चित्त ही पवित्रता के सम्बन्ध में अपना साक्षी है।

९४०. दोष से भी दोष घटते हैं, जैसे अज्ञान से पाप की गुरुता घट जाती है।

९४१. यः स्पर्धया येन निजप्रतिष्ठां
लिप्सुः स एवाह तदुन्नतत्वम्। १०.४९

९४२. एकाम्बुबिन्दुव्ययमम्बुराशेः
पूर्णस्य कः शंसति शोषदोषम्॥ १०.६४

९४३. सुज्ञं प्रतीङ्गितविभावनमेव वाचः॥ ११.१०१

९४४. सिते हि जायेत शितेः सुलक्ष्यता। १२.२२

९४५. नार्कातपैर्जलजमेति हिमैस्तु दाहम्। १३.५०

९४६. देवा हि नान्यद्वितरन्ति किन्तु
प्रसद्य ते साधुधियं ददन्ते। १४.९

९४७. मान्येन मन्ये विधिना वितीर्णः स प्रीतिदायो बहुमन्तुमर्हः।
१४.८७

---

९४१. जो किसी की स्पर्धा करते हुए अपनी प्रतिष्ठा चाहता है, वह उन (अपने प्रतिद्वन्दी) की उन्नति ही प्रकट करता है।

९४२. पूर्ण समुद्र में एक बूँद का व्यय होने पर उसके सूखने का दोष कौन कहेगा ?

९४३. समझनेवाले लोगों के लिए संकेत करना ही कहना है।

९४४. श्वेत वस्तुओं के बीच कालिमा सरलता से परिलक्षित होती है।

९४५. कमल सूर्य के आतप से नहीं, हिम से दाह प्राप्त करता है।

९४६. देवता और कुछ तो नहीं देते किन्तु प्रसन्न होकर सद्बुद्धि तो देते ही हैं।

९४७. मान्य व्यक्ति के द्वारा सत्कारपूर्वक दिया हुआ प्रेम का दान सर्वोच्च प्रतिष्ठित है।

# भामिनी-विलासः

## प्रास्ताविक-विलासः

९४८. कमलिनि मलिनीकरोषि चेतः
किमिति बकैरवहेलितानभिज्ञैः।
परिणतमकरन्दमार्मिकास्ते
जगति भवन्तु चिरायुषो मिलिन्दाः॥ ८

९४९. पाटीर तव पटीयान् कः परिपाटीमिमामुरीकर्त्तुम्।
यत् पिंषतामपि नृणां पिष्टोऽपि तनोषि परिमलैः पुष्टिम्॥ ११

९५०. नीरक्षीरविवेके हंसालस्यं त्वमेव तनुषे चेत्।
विश्वस्मिन्नधुनान्यः कुलव्रतं पालयिष्यति कः॥ १२

९५१. उपरिकरवालधाराकाराः क्रूरा भुजङ्गमपुंगवात्।
अन्तः साक्षाद् द्राक्षादीक्षागुरवो जयन्ति केऽपि जनाः॥ १३

---

९४८. हे कमलिनि, अज्ञानी बगुलों से उपेक्षित होने पर क्यों चित्त को खिन्न करती हो। परिपक्व मकरन्द के रसज्ञ भ्रमर संसार में दीर्घायु हों (वे तो तुम्हारा आदर करेंगे ही।)

९४९. हे चन्दन, तुम्हारी रीति को अपनाने में कौन मनुष्य कुशल है। तुम तो पीसे जाते हुए भी पीसने वाले को अपनी सुगन्धि से सुरभित करते हो।

९५०. हे हंस, यदि तुम्हीं नीर-क्षीर का विवेचन करने में आलस्य करने लगे तो इस संसार में अब और कौन अपने कुलव्रत का पालन करेगा ?

९५१. वे वर्णनातीत महापुरुष विजयी हों, जो ऊपर से तलवार की धार के समान अथवा महानाग से भी बढ़कर क्रूर हैं किन्तु भीतर से वे (अपनी कोमलता के कारण) दाख को भी पाठ पढ़ा सकते हैं।

९५२. तटिनि चिराय विचारय विन्ध्यभुवस्तव पवित्रायाः।
शुष्यन्त्या अपि युक्तं किं खलु रथ्योदकादानम्॥ २१

९५३. नापेक्षा न च दाक्षिण्यं न प्रीतिर्न च संगतिः।
तथापि हरते तापं लोकानामुन्नतो घनः॥ ३७

९५४. किं खलु रत्नैरेतैः किं पुनरभ्रायितेन वपुषा ते।
सलिलमपि यन्न तावकमर्णव वदनं प्रयाति तृषितानाम्॥ ४०

९५५. मुक्ता मृणालपटली भवता निपीता-
न्यम्बूनि यत्र नलिनानि निषेवितानि।
रे राजहंस वद तस्य सरोवरस्य
कृत्येन केन भवितासि कृतोपकारः॥ ४५

---

९५२. हे नदी, ठीक से विचार कर लो, विन्ध्य पर्वत से उत्पन्न होने वाली और पवित्र तुम्हारे लिए सूखते होने पर भी गली का सड़ा पानी स्वीकार करना क्या उचित है?

९५३. कोई आवश्यकता नहीं, दाक्षिण्य भी नहीं, प्रेम या सङ्गति भी नहीं है। तो भी ऊँचे बादल लोगों का सन्ताप हरते हैं।

९५४. हे समुद्र, इन रत्नों से क्या? तुम्हारे बादल के सदृश शरीर से क्या? जब तुम्हारा पानी प्यासे के मुँह में नहीं पड़ता।

९५५. हे राजहंस, जहाँ मृणालों का समूह तुम्हारे द्वारा खाया गया, पानी पीया गया और कमलों का उपभोग किया गया, उस सरोवर का प्रत्युपकार अब अपने किस काम से करोगे? बताओ।

९५६. निसर्गादारामे तरुकुलसमारोपसुकृती
कृती मालाकारो बकुलमपि कुत्रापि निदधे।
इदं को जानीते यदयमिह कोणान्तरगतो
जगज्जालं कर्त्ता कुसुमभरसौरभ्यभरितम्॥ ५२

९५७. विदुषां वदनाद्वाचः सहसा यान्ति नो बहिः।
याताश्चेन्न पराञ्चन्ति द्विरदानां रदा इव॥

९५८. औदार्यं भुवनत्रयेऽपि विदितं सम्भूतिरम्भोनिधेः
वासो नन्दनकानने परिमलो गीर्वाणचेतोहरः।
एवं दातृगुरोर्गुणाः सुरतरोः सर्वेऽपि लोकोत्तराः
स्यादर्थिप्रवरार्थितार्पणविधावेको विवेको यदि॥ ६४

९५९. विश्वास्य मधुरवचनैः साधून्ये वंचयन्ति नम्रतमाः।
तानपि दधासि मातः काश्यपि यातस्तवापि च विवेकः॥ ६६

---

९५६. वृक्षों के समूह के रोपने के कारण पुण्यशाली एवं कुशल माली ने स्वभावतः उद्यान में कहीं मौलिश्री को भी स्थान दे दिया। पर जानता कौन था कि कोने में पड़ा हुआ यह विश्वमण्डल को अपनी पुष्पराशि के सुगन्ध से भर देगा ?

९५७. विद्वानों के मुख से सहसा बातें बाहर नहीं निकलतीं और यदि कहीं निकलीं ही तो हाथी के दाँत की तरह कभी परावर्तित नहीं होतीं।

९५८. तीनों लोकों में उदारता प्रख्यात है, जन्म समुद्र से हुआ है, वास नन्दन वन में है, सुगन्ध देवताओं के चित्त को हर लेती है। इस प्रकार कल्पवृक्ष में श्रेष्ठ दाता के सभी लोकोत्तर गुण हैं यदि कहीं उसमें श्रेष्ठ याचकों की प्रार्थना को पूरा करने की विवेचन-शक्ति भी होती।

९५९. हे पृथिवि, जो अत्यन्त विनीत बन कर साधुओं को मीठी बातों से विश्वास देकर ठगते हैं, उन जैसे दुष्टों को भी तुम धारण करती हो। तुम्हारा विवेक कहाँ चला गया ?

९६०. अन्या जगद्धितमयी मनसः प्रवृत्तिः
अन्यैव कापि रचना वचनावलीनाम्।
लोकोत्तरा च कृतिराकृतिरार्तहृद्या
विद्यावतां सकलमेव गिरां दवीयः॥ ६७

९६१. आपद्गतः खलु महाशयचक्रवर्ती
विस्तारयत्यकृतपूर्वमुदारभावम्।
कालागुरुर्दहनमध्यगतः समन्तात्
लोकोत्तरं परिमलं प्रकटीकरोति॥ ६८

९६२. विश्वाभिरामगुणगौरवगुम्फितानां
रोषोऽपि निर्मलधियां रमणीय एव।
लोकंपृणैः परिमलैः परिपूरितस्य
कश्मीरजस्य कटुतापि नितान्तरम्या॥ ६९

---

९६०. विद्वानों का संसार का उपकार करने वाली मन की प्रवृत्ति विचित्र ही होती है। उनकी वाणी की रचना विलक्षण होती है। उनकी कृति लोकोत्तर होती है। आकार दुःखियों को प्रसन्न कर देने वाला होता है। विद्वानों का सब कुछ वाणी की परिधि से दूर होता है।

९६१. महापुरुषों में जो चक्रवर्ती होता है, वह विपत्ति पड़ने पर एक अपूर्व ही उदार भाव को प्रसारित करता है। कालागुरु चन्दन चारों ओर से आग में पड़ने पर लोकोत्तर सुगन्ध प्रकट करता है।

९६२. संसार को मनोरम लगनेवाले गुणों की अधिकता से सम्पन्न निर्मल बुद्धिवाले लोगों का क्रोध भी रमणीय होता है। लोगों को प्रसन्न कर देनेवाली सुगन्ध से भरी हुई कश्मीर की केसर की कटुता भी नितान्त रम्य होती है।

९६३. गीर्भिगुरूणां परुषाक्षराभिः
तिरस्कृता यान्ति नरा महत्त्वम्।
अलब्धशाणोत्कषणा नृपाणां
न जातु मौलौ मणयो वसन्ति॥ ७१

९६४. सत्पूरुषः खलु हिताचरणैरमन्दम्
आनन्दयत्यखिललोकमनुक्त एव।
आराधितः कथय केन करैरुदारैः
इन्दुर्विकासयति कैरविणीकुलानि॥ ७३

९६५. परार्थव्यासङ्गादुपजहदथ स्वार्थपरताम्
अभेदैकत्वं यो वहति गुणभूतेषु सततम्।
स्वभावाद्यस्यान्तः स्फुरति ललितोदात्तमहिमा
समर्थो यो नित्यं स जयतितरां कोऽपि पुरुषः॥ ७४

---

९६३. गुरुओं की परुषाक्षरवाली वाणी से तिरस्कृत लोग महत्त्व प्राप्त करते हैं। सान पर घिसे बिना मणि राजाओं के सिर पर स्थान नहीं पाते।

९६४. सत्पुरुष बिना कहे हुए ही अपने सदाचार से सभी लोगों को पूर्णतया आनन्दित करते हैं। बताइये, किसके द्वारा कहे जाने पर चन्द्रमा अपनी उदार किरणों से कुमुदिनियों को विकसित कर देता है?

९६५. दूसरे का काम बनाने के लिए जिसने अपनी स्वार्थपरता छोड़ दी है, अपने से हीन लोगों के प्रति भी जो सदा भेदरहित एकता का भाव रखता है, जिसके हृदय में स्वभावतः ललित और उच्च महिमा विकसित होती है और जो नित्य समर्थ है, वह विलक्षण पुरुष सर्वोत्कृष्ट है।

९६६. किं तीर्थं हरिपादपद्मभजनं किं रत्नमच्छा मतिः
किं शास्त्रं श्रवणेन यस्य गलति द्वैतान्धकारोदयः।
किं मित्रं सततोपकाररसिकं तत्त्वावबोधः सखे
कः शत्रुर्वद खेददानकुशलो दुर्वासनानां चयः॥ ८१

९६७. निष्णातोऽपि च वेदान्ते साधुत्वं नैति दुर्जनः।
चिरं जलनिधौ मग्नो मैनाक इव मार्दवम्॥ ८२

९६८. धत्ते भरं कुसुमपत्रफलावलीनां
घर्मव्यथां वहति शीतभवां रुजं च।
यो देहमर्पयति चान्यसुखस्य हेतोः
तस्मै वदान्यगुरवे तरवे नमोऽस्तु॥ ८९

९६९. गिरयो गुरवस्तेभ्योऽप्युर्वी गुर्वी ततोऽपि जगदण्डम्।
तस्मादप्यतिगुरवः प्रलयेऽप्यचला महात्मानः॥ ९२

---

९६६. तीर्थ क्या है? हरिपादपद्मभजन। रत्न क्या है? स्वच्छ बुद्धि। शास्त्र क्या है? जिसके सुनने से द्वैत रूपी अन्धकार का उदय न हो। सदैव उपकार-रसिक मित्र क्या है? तत्त्वावबोध। हे मित्र, यह बताओ कौन खेद पहुँचाने में कुशल शत्रु है? दुर्वासनाओं का समूह।

९६७. दुर्जन वेदान्त का पण्डित होने पर भी अच्छा नहीं बन जाता। चिर-काल से समुद्र में मग्न होने पर भी मैनाक पर्वत मृदु नहीं बन पाया।

९६८. उस महादानी श्रेष्ठ वृक्ष को नमस्कार है, जो पुष्प, पत्र और फल की राशि का भार धारण करता है, घाम सहता है और शीत से उत्पन्न रोग को भी भोगता है। वह वृक्ष दूसरों के सुख के लिये अपने शरीर को अर्पित कर देता है।

९६९. पर्वत महान् हैं। उनसे बड़ी पृथ्वी और उससे बड़ा ब्रह्माण्ड है। उस ब्रह्माण्ड से भी बहुत बड़े वे महात्मा हैं, जो प्रलय में भी अचल होते हैं।

९७०. स्वार्थं धनानि धनिकात् प्रतिगृह्णतो यत्
आस्यं भजेन्मलिनतां किमिदं विचित्रम्।
गृह्णन् परार्थमपि वारिनिधेः पयोऽपि
मेघोऽयमेति सकलोऽपि च कालिमानम्॥ ९६

---

## शृङ्गार-विलासः

९७१. तदवधि कुशली पुराणशास्त्र-
स्मृतिशतचारुविचारजो विवेकः।
यदवधि न पदं दधाति चित्ते
हरिणकिशोरदृशो दृशोर्विलासः॥ १३

९७२. उपनिषदः परिपीता गीतापि च हन्त मतिपथं नीता।
तदपि न हा विधुवदना मानससदनाद् बहिर्याति॥ ३८

---

९७०. धनी से अपने लिए धन लेने वाले का मुँह यदि काला हो तो क्या विचित्रता है? दूसरों के लिए भी समुद्र से जल लेनेवाला मेघ पूरा का पूरा ही काला हो जाता है।

---

९७१. सैकड़ों पुराण, शास्त्र और स्मृतियों के अध्ययन के फलस्वरूप विवेक तभी तक समर्थ रहता है, जब तक मृगनयनी के कटाक्ष हृदय में स्थान नहीं बना लेते।

९७२. उपनिषद् भलीभाँति पीये गये, गीता भी बुद्धि-मार्ग से परिशीलित की गई। तब भी चन्द्रवदना मेरे मानस-सदन से बाहर नहीं जाती।

## शान्तविलासः

९७३. सन्त्येवास्मिन् जगति बहवः पक्षिणो रम्यरूपाः
तेषां मध्ये मम तु महती वासना चातकेषु
यैरध्यक्षैरथ निजसखं नीरदं स्मारयद्भिः
चित्तारूढं भवति किमपि ब्रह्मकृष्णाभिधानम्॥ ११

९७४. भवग्रीष्मप्रौढातपनिवहसंतप्तवपुषः
बलादुन्मूल्य द्राङ्‌निगडमविवेकव्यतिकरम्।
विशुद्धेऽस्मिन्नात्मामृतसरसि नैराश्यशिशिरे
विगाहन्ते दूरीकृतकलुषजालाः सुकृतिनः॥ १४

९७५. गिरां देवी वीणागुणरणनहीनादरकरा
यदीयानां वाचममृतमयमाचामति रसम्।
वचस्तस्याकर्ण्य श्रवणसुभगं पण्डितपते-
रधुन्वन्मूर्धानं नृपशुरथवायं पशुपतिः॥ २७

---

९७३. इस संसार में बहुत से रम्य रूप वाले पक्षी हैं। इन सब से चातक के प्रति मेरा विशेष अनुराग है, जो प्रत्यक्ष ही अपने बन्धु मेघ का स्मरण कराते हुए कृष्ण नामवाले अनिर्वचनीय ब्रह्म को स्मृति-पथ में ला देता है।

९७४. संसार रूपी ग्रीष्म में प्रखर आतप समूह से संतप्त शरीरवाले पुण्यशाली लोग बलपूर्वक अविवेक राशि के बन्धन को सहसा तोड़कर अपने कलुष-जाल को दूर करके विशुद्ध आध्यात्मिक सुधा-सरोवर में स्नान करते हैं, जो सरोवर नैराश्य के कारण शीतल है।

९७५. वह पुरुष या तो शिव ही है नहीं तो पशु ही है, यदि वह उस कविराज की श्रवण सुखद वाणी को सुनकर झूमने नहीं लगता, जिसकी वाणी के अमृत-रस का आचमन स्वयं सरस्वती करती है और उसके हाथ वीणा-तन्त्री का अणुरणन करने से रुक जाते हैं।

## व्यासः

९७६. अहो बत महत्कष्टं विपरीतमिदं जगत्।
येनापत्रपते साधुरसाधुस्तेन तुष्यति॥

९७७. अप्राप्तकालं वचनं बृहस्पतिरपि ब्रुवन्।
लभते बुद्धयवज्ञानमवमानं च केवलम्॥

९७८. आयुषः क्षण एकोऽपि न लभ्यः स्वर्णकोटिभिः।
स वृथा नीयते येन तस्मै नृपशवे नमः॥

९७९. तिष्ठत्येकेन पादेन चलत्येकेन पण्डितः।
नापरीक्ष्य तरं स्थानं पूर्वमायतनं त्यजेत्॥

९८०. एकश्चन्द्रस्तमो हन्ति न च तारा सहस्रशः॥

---

९७६. बड़ी कष्ट की बात है। यह संसार विपरीत है। जिससे अच्छा मनुष्य लज्जित होता है, उसी से असाधु सन्तुष्ट होता है।

९७७. बृहस्पति भी असमय बात बोलते हुए अपनी बुद्धि का अनादर और कोरी निन्दा प्राप्त करते हैं।

९७८. आयु का एक क्षण भी कोटि स्वर्ण मुद्राओं से नहीं मिल सकता। वह (क्षण) जिसके द्वारा वृथा बिताया जाता है, उस नृपशु को नमस्कार।

९७९. पण्डित एक पैर से खड़ा रहता है, दूसरे से चलता है। दूसरा स्थान देखे बिना पहला स्थान न छोड़े।

९८०. अकेले चन्द्रमा अन्धकार को दूर कर देता है, सहस्रों तारे नहीं दूर कर पाते।

९८१. गच्छन्पिपीलको याति योजनानां शतान्यपि।
अगच्छन्वैनतेयोऽपि पदमेकं न गच्छति॥

९८२. वनानि दहतो वह्नेः सखा भवति मारुतः।
स एव दीपनाशाय क्षीणे कस्यास्ति सौहृदम्॥

९८३. गुणेषु यत्नः क्रियतां किमाटोपैः प्रयोजनम्।
विक्रीयन्ते न घण्टाभिर्गावः क्षीरविवर्जिताः॥

९८४. संभोजनं संकथनं, संप्रश्नोऽथ समागमः।
ज्ञातिभिः सह कार्याणि न विरोधः कथंचन॥

९८५. अप्रार्थितानि दुःखानि यथैवायान्ति देहिनाम्।
सुखानि च तथा मन्ये दैन्यमत्रातिरिच्यते॥

९८६. यदीच्छसि वशीकर्तुं जगदेकेन कर्मणा।
परापवादसस्येभ्यो गां चरन्तीं निवारय॥

---

९८१. चलते हुए चींटा सैकड़ों योजन पार कर जाता है। न चलता हुआ गरुड़ एक पद भी नहीं जाता।

९८२. वायु वन जलानेवाले अग्नि का मित्र है। वह दीप बुझाने के लिए भी (कारण है)। क्षीण का कोई मित्र नहीं।

९८३. गुण के लिए यत्न किया जाय, आडम्बर से क्या प्रयोजन? दूध से रहित गायें घण्टा बाँधने से नहीं बिकतीं।

९८४. साथ भोजन, साथ बातचीत, कुशल-प्रश्न और साथ चलना परिचित लोगों के साथ होना चाहिए। कभी उनसे विरोध न करे।

९८५. मनुष्य को बिना माँगे जैसे दुःख आते हैं, वैसे ही सुख भी आते हैं। केवल (सुख के साथ) दैन्य (हीनता की भावना) का प्रदर्शन क्यों?

९८६. यदि एक ही काम से जगत् को वश में करना चाहते हो तो अपनी जीभ को परनिन्दा से वैसे ही बचाओ, जैसे खेती को गौओं से।

९८७. गतेऽपि वयसि ग्राह्या विद्या सर्वात्मना बुधैः।
इह चेत्स्यान्न फलदा फलदा साऽन्यजन्मनि॥

९८८. अनुगन्तुं सतां वर्त्म कृत्स्नं यदि न शक्यते।
स्वल्पमप्यनुगन्तव्यं मार्गस्थो नावसीदति॥

९८९. परवाच्येषु निपुणः सर्वो भवति सर्वदा।
आत्मवाच्यं न जानाति जानन्नपि विमुह्यति॥

९९०. न्यायेनोपार्जिता दत्ता काकिण्यपि महाफला।
अन्यायेनार्जिता दत्ता न परार्थाः सहस्रशः॥

९९१. एहि गच्छ पतोत्तिष्ठ वद मौनं समाचर।
इत्थमाशाग्रहग्रस्तैः क्रीडन्ति धनिनोऽर्थिभिः॥

९९२. वरं हि नरके वासो न तु दुश्चरिते गृहे।
नरकात्क्षीयते पापं कुगृहात्परिवर्धते॥

---

९८७. अवस्था बीत जाने पर भी बुद्धिमानों के द्वारा विद्या पूरे मन से ग्रहणीय है। यदि वह इस लोक में फल देनेवाली नहीं है तो वह दूसरे जन्म में फल देगी।

९८८. यदि सज्जनों के मार्ग पर पूरा नहीं चला जा सकता तो थोड़ा ही चले। सन्मार्ग पर चलने वाला पुरुष नष्ट नहीं होता है।

९८९. दूसरे की निन्दा में सभी सदा निपुण होते हैं। कोई अपना दोष नहीं जानता। जानते हुए भी अनजान रहता है।

९९०. न्याय से प्राप्त दान दी हुई कौड़ी महाफल देती है किन्तु अन्याय से प्राप्त दूसरों का हजार धन भी फल नहीं देता।

९९१. आओ, जाओ, गिरो, उठो, बोलो, चुप रहो—इस प्रकार आशा-पाश से बाँधे हुए याचकों से धनी लोग खेला करते हैं।

९९२. नरक में रहना अच्छा, किन्तु दुश्चरित घर में रहना ठीक नहीं। नरक से पाप का क्षय होता है, बुरे घर से (पाप) बढ़ता है।

९९३. न देवा यष्टिमादाय रक्षन्ति पशुपालवत्।
यं तु रक्षितुमिच्छन्ति बुद्ध्या संयोजयन्ति तम्।।
९९४. न बुद्धिर्धनलाभाय न जाड्यमसमृद्धये।
लोकपर्यायवृत्तान्तं प्राज्ञो जानाति नेतरः।।
९९५. आपत्सु किं विषादेन सम्पत्तौ विस्मयेन किम्।
भवितव्यं भवत्येव कर्मणामेष निश्चयः।।
९९६. यथा छायातपौ नित्यं सुसम्बद्धौ निरन्तरम्।
तथा कर्म च कर्ता च सम्बद्धौ सर्वजन्तुषु।।
९९७. जन्मान्तरशताभ्यस्ता विषयेषु मतिर्नृणाम्।
जरद्गौरिव सस्येभ्यः सा हि दुःखेन वार्यते।।
९९८. आशा बलवती कष्टं नैराश्यं परमं सुखम्।
९९९. बलिभिर्मुखमाक्रान्तं पलितै रञ्जितं शिरः।
गात्राणि शिथिलायन्ते तृष्णैका तरुणायते।।

---

९९३. पशुपालक की भाँति लाठी लेकर देवता रक्षा नहीं करते। जिसकी रक्षा करना चाहते हैं, उसे बुद्धि से समायुक्त कर देते हैं।
९९४. बुद्धि धनलाभ के लिए नहीं, जड़ता धनहीनता के लिए नहीं। प्राज्ञ ही लोगों के क्रमिक वृत्तान्त को जानता है, दूसरा नहीं।
९९५. आपत्ति में विषाद क्यों, सम्पत्ति में अभिमान क्यों ? जो होना है, वह होगा ही—यह कर्मों का निश्चय है।
९९६. जैसे छाया और धूप नित्य निरन्तर सुसम्बद्ध हैं, वैसे ही कर्म और कर्ता सभी प्राणियों से सम्बद्ध हैं।
९९७. लोगों की मति विषयों के प्रति सैकड़ों जन्मों से प्रवृत रही है। जैसे सस्य से बूढ़ी गाय हटाना कठिन है, वैसे ही विषयों से बुद्धि को।
९९८. बलवती आशा कष्टप्रद है। नैराश्य परम सुख है।
९९९. चेहरे पर झुर्रियाँ छा गईं। सिर के बाल श्वेत हो गये। अंग शिथिल हो गये। फिर भी लालच जोर पकड़ती जा रही है।

१०००. सेवकादापरो मूर्खस्त्रैलोक्येऽपि न विद्यते।
दिने दिने नमन्मोहादुन्नतिं योऽभिवाञ्छति ॥

१००१. एतावज्जन्मसाफल्यं यदनायत्तवृत्तिता।
ये पराधीनजन्मानस्ते चेज्जीवन्ति के मृताः ॥

१००२. अपकारिषु मा पापं चिन्तयस्व महामते।
स्वयमेव हि नश्यन्ति कूलजाता इव द्रुमाः ॥

## प्रकीर्णकानि

१००३. पित्रास्येदं कृतमिति तत्कर्मणि योजयेन्न दुष्पुत्रम्।
हवनविधौ हव्यभुजां तिलं प्रशंसन्ति न तु तैलम्। अर्गट

१००४. सर्वं यस्य वशादगात्स्मृतिपथं कालाय तस्मै नमः। कमलायुध

१००५. कः स्वभावगभीराणां जानीयाद्बहिरापदम्। कल्हण

---

१०००. सेवक से बढ़कर मूर्ख त्रिलोक में भी नहीं है। प्रतिदिन मोह से नत रहते हुए भी वह उन्नति चाहता है।

१००१. यहीं तक जन्म की सफलता है कि स्वाधीन वृत्ति हो। जो पराधीन जीवनवाले हैं, यदि वे जीवित हैं तो मरा कौन है?

१००२. हे महामते, अपकार करनेवालों का अनिष्ट मत सोचो। वे तो स्वयं ही किनारे पर उत्पन्न वृक्ष की भाँति नष्ट हो जाते हैं।

१००३. इसके पिता के द्वारा यह काम किया गया, इस विचार से बुरे पुत्र को उस काम में न लगा दे। हवन-विधि में देवताओं के लिए तिल की प्रशंसा की गई है, तेल की नहीं!

१००४. जिसके वश में होने से सब कुछ स्मरणीय मात्र रह गये, उस काल को नमस्कार।

१००५. स्वभाव से गम्भीर लोगों की आपत्ति को बाहर से कौन जान सकता है?

१००६. जीवताऽपि शवेनेन कृपणेन न दीयते ।
मांसं वर्धयतानेन काकस्योपकृतिः कृता ।। कविराज

१००७. सज्जना एव साधूनां प्रथयन्ति गुणोत्करम् ।
पुष्पाणां सौरभं प्रायस्तन्वते दिक्षु मारुताः ।। कुसुमदेव

१००८. पातितोऽपि कराघातैरुत्पत्यैव कन्दुकः ।
प्रायेण हि सुवृत्तानामस्थायिन्यो विपत्तयः ।। क्षेमेन्द्र

१००९. उदेति सविता रक्तो रक्त एवास्तमेति च ।
सम्पत्तौ च विपत्तौ च महतामेकरूपता ।। क्षेमेन्द्र

१०१०. गुणवज्जनसम्पर्काद्याति स्वल्पोऽपि गौरवम् ।
पुष्पमालानुषङ्गेण तृणं शिरसि धार्यते ।। क्षेमेन्द्र

१०११. नमोऽस्तु दैवाय यथेष्ट कर्त्रे । क्षेमेन्द्र

---

१००६. जीवनकाल में शव की भाँति कृपण के द्वारा दान नहीं दिया जाता । उसके द्वारा अपना मांस बढ़ाकर कौवे का उपकार तो किया ही जाता है ।

१००७. सज्जन ही सज्जनों की गुणावली का प्रचार करते हैं । वायु (देव) ही प्रायः दिशाओं में पुष्पों के सौरभ को फैलाते हैं ।

१००८. कराघातों से गिराया हुआ भी कन्दुक ऊपर उठ ही जाता है । सुचरित वाले लोगों की विपत्तियाँ प्राय अस्थायी होती हैं ।

१००९. सूर्य लाल उदित होता है, लाल ही अस्त होता है । सम्पत्ति और विपत्ति में महापुरुषों की एकरूपता होती है ।

१०१०. गुणी लोगों के सम्पर्क से छोटे भी गौरव पाते हैं । पुष्प-माला के साथ होने से तृण भी सिर पर धारण किया जाता है ।



१०११. दैव को नमस्कार है—जैसा चाहे कर लेता है ।

१०१२. अनुहरतः खलसुजनावग्रिमपाश्चात्यभागयोः सूच्याः।
एकः कुरुते छिद्रं गुणवानन्यः प्रपूरयति ।। गोभट्ट
१०१३. दृढतरनिबद्धमुष्टेः कोषनिषण्णस्य सहजमलिनस्य ।
कृपणस्य कृपाणस्य च केवलमाकारतो भेदः।। गोभट्ट
१०१४. उपभुक्तं विषं हन्ति विषयाः स्मरणादपि। चन्द्रगोपी
१०१५. कृष्णं वपुर्वहतु चुम्बतु सत्फलानि
रम्येषु संचरतु चूतवनान्तरेषु।
पुंस्कोकिलस्य चरितानि करोतु नाम
काकः किल ध्वनिविधौ ननु काक एव।। जयवर्धन
१०१६. सर्वस्यैव हि लोकस्य बहुमानं यदात्मनि।
विष्णोर्मायासहस्रस्य इयमेका गरीयसी।। ज्ञानश्री

---

१०१२. खल और सुजन सुई की नोक और पीछे के भाग के समान आचरण करते हैं। एक (नोक) तो छेद करता है और दूसरा (पीछे का भाग) गुणवान् (धागे वाला) होने से छेद को बन्द कर देता है।

१०१३. मुट्ठी को कस कर बाँधे हुए, अपने कोश पर बैठे हुए और स्वभावतः उदास रहनेवाले कृपण की केवल आकार से ही कृपाण से भिन्नता प्रतीत होती है। कृपाण की भी मुट्ठियाँ मजबूती से बँधी होती हैं, वह कोष में पड़ा रहता है और सहज ही मलिन होता है।

१०१४. विष तो खाने पर मारता है पर विषय स्मरण मात्र से ही मारते हैं।

१०१५. काला शरीर रखे, अच्छे फल चखे, आम के रम्य वनों में विचरे—कोयल के सभी चरितों का अनुकरण करे। फिर भी कौवा बोलने में कौवा ही रहेगा।

१०१६. सभी लोगों का अपने लिए बहुमान होता है। विष्णु की सहस्रों मायाओं में से यह एक सबसे बढ़कर है।

१०१७. काकैः सह विवृद्धस्य कोकिलस्य कला गिरः।
खलसङ्गेऽपि नैष्ठुर्यं कल्याणप्रकृतेः कुतः।। तक्षक

१०१८. आरोग्यं विद्वत्ता सज्जनमैत्री महाकुले जन्म।
स्वाधीनता च पुंसां महदैश्वर्यं विनाप्यर्थैः।। दामोदरगुप्त

१०१९. लक्ष्मीसम्पर्करूपोऽयं दोषः पद्मस्य निश्चितम्।
यदयं गुणसन्दोहधामनीन्दौ पराङ्मुखः।। प्रकाशवर्ष

१०२०. धात्रा श्रियं निदधता प्रखलेषु नित्यम्।
अत्युज्ज्वलः खलु घटे निहितः प्रदीपः।। प्रकाशवर्ष

१०२१. अल्पेनैव गुणेन हि कश्चिल्लोके प्रसिद्धिमुपयाति।
एकेन करेण गजः करी न सूर्यः सहस्रेण।। प्रकाशवर्ष

१०२२. स्पृहणीयाः कस्य न ते सुमतेः सरलाशया महात्मानः।
त्रयमपि येषां सदृशं हृदयं वचनं तथाचारः।। बल्लभदेव

---

१०१७. कौवे के साथ संवर्धित कोयल की वाणी में मधुरता होती है। दुष्टों के साथ में होने पर भी कल्याणमयी प्रकृति वालों में निठुरता नहीं आती।

१०१८. आरोग्य, विद्वत्ता, सज्जनों से मैत्री, उच्च कुल में जन्म और स्वाधीनता पुरुष के लिए धन के बिना भी महान् ऐश्वर्य हैं।

१०१९. लक्ष्मी के सम्पर्क के अनुरूप यह दोष निश्चय ही कमल में है कि वह गुणावली के धाम चन्द्रमा के उगने पर पराङ्मुख हो जाता है।

१०२०. विधाता के द्वारा धन की राशि दुष्टों के हाथ सौंपी गयी, मानो अत्यन्त उज्ज्वल दीप घड़े में रख दिया गया।

१०२१. थोड़े गुण से ही कोई पुरुष संसार में प्रसिद्धि प्राप्त कर लेता है। एक कर से हाथी करी है, पर सहस्र कर से सूर्य करी नहीं हुआ।

१०२२. किस सुमति के लिए सरल आशय वाले महात्मा स्पृहणीय न होंगे, जिनके हृदय, वचन और आचार—तीनों ही समान हैं।

१०२३. मुखेनैकेन विध्यन्ति पादमेकस्य कण्टकाः।
दूरान्मुखसहस्रेण सर्वप्राणहराः खलाः॥ भट्ट पृथ्वीधर

१०२४. असम्भवो हेममयस्य जन्तोः
तथापि रामो लुलुभे मृगाय॥ भट्टानन्दक

१०२५. स्वयमाहतगजभोक्तुः सिंहस्य हि दुर्लभा वृत्तिः। भट्टार्क

१०२६. प्राप्ते वसन्तमासे वृद्धिं प्राप्नोति सकलवनराजिः।
यन्न करीरे पत्रं तत्किं दोषो वसन्तस्य॥ भल्लट

१०२७. सुजनः परुषाभिभाषिणो यदि कः स्यादपरोऽपि मंजुवाक्।
यदि चन्द्रकराः सवह्नयः ननु जायेत सुधा कुतोऽन्यतः॥
मंगल

१०२८. वैद्यनाथ नमस्तुभ्यं क्षपिताशेषमानव।
त्वयि संन्यस्तभारोऽयं कृतान्तः सुखमेधते॥ मय

---

१०२३. कण्टक एक मुख से किसी के एक पैर को (केवल) बींधते हैं। खल दूर से ही सहस्र मुख से सब का प्राण हरते हैं।

१०२४. सोने का मृग असम्भव है, तथापि राम को उसके लिए लोभ उत्पन्न हुआ।

१०१५. अपने ही मारे हुए हाथी को खाने वाले सिंह की वृत्ति दुर्लभ होती है।

१०२६. वसन्त मास आने पर सभी वनराजि समृद्धि प्राप्त करती है। करीर में यदि पत्ते न लगें तो इसमें वसन्त का क्या दोष ?

१०२७. यदि सज्जन भी परुष बोलने वाले हों तो फिर दूसरा कौन मधुर बोलेगा ? यदि चन्द्र की किरणें आग भरी हों तो अमृत कहाँ से निकलेगा ?

१०२८. हे वैद्यनाथ, सारे मानव का विनाश करने वाले आपको नमस्कार। आप पर भार सौंप कर यह यमराज सुख पाता है।

१०२९. ते सावत्रो भुवनमण्डलमौलिभूता।
ये साधुतां निरुपकारिषु दर्शयन्ति।। रत्नाकर

१०३०. सुजनो न याति वैरं परहितनिरतो विनाशकालेऽपि।
छेदेऽपि चन्दनतरुः सुरभयति मुखं कुठारस्य।। रविगुप्त

१०३१. दूरेऽपि परस्यागसि पटुर्जना नात्मनः समीपेऽपि।
स्वं व्रणमक्षि न पश्यति शशिनि कलङ्कं निरूपयति।। रविगुप्त

१०३२. न केवलं मनुष्येषु दैवं देवेष्वपि प्रभुः।
सति मित्रे धनाध्यक्षे चर्मप्रावरणो हरः।। रविगुप्त

१०३३. तुल्यवर्णच्छदः कृष्णः कोकिलैः सह संगतः।
केन विज्ञायते काकः स्वयं यदि न भाषते।। वाल्मीकि

१०३४. सर्वत्र सम्पदस्तस्य सन्तुष्टं यस्य मानसम्।। वाल्मीकि

---

१०२९. वे ही सत्पुरुष भुवन-मण्डल के शिरोमणि हैं, जो उपकारहीन लोगों के प्रति साधुता प्रकट करते हैं।

१०३०. परोपकार में तत्पर अपने विनाश के समय भी वैरी नहीं बनते। कटने पर भी चन्दन वृक्ष (काटने वाली) कुल्हाड़ी का मुँह सुगन्धित कर देता है।

१०३१. लोग दूर होने पर भी दूसरे के दोष-दर्शन में निपुण होते हैं। अपने दोष को समीप होने पर भी नहीं देख पाते। आँख अपने घाव को नहीं देख पाती, चन्द्रमा में कलङ्क को देखती है।

१०३२. केवल मनुष्यों में ही नहीं देवताओं पर भी दैव का प्रभाव है। धनाध्यक्ष कुबेर के मित्र होने पर भी शिव को चमड़ा ही ओढना पड़ता है।

१०३३. कोकिल के समान ही पंखों का रङ्ग होता है, कोयल का साथ रखता है। ऐसे कौवे को कौन समझ पाता, यदि वह स्वयं न बोलता ?


१०३४. जिसका मन सन्तुष्ट है, उसके लिए सर्वत्र सम्पत्तियाँ हैं।

१०३५. एते स्निग्धतमा इति मा मा क्षुद्रेषु कुरुत विश्वासम्।
सिद्धार्थानामेषां स्नेहोऽप्यश्रूणि पातयति ।। शतानन्द

१०३६. सद्यो विभिद्यते नूनं दरिद्रतनुपंजरम्।
यदि न स्यात् मनोराज्यरज्जुभिर्दृढसंयतम्।। शुभाङ्ग

१०३७. अर्थो न सम्भृतः कश्चिन्न विद्या काचिदर्जिता।
न तपः संचितं किंचिद् गतं च सकलं वयः।। सरोक

१०३८. लघीयः प्राज्यं वा 'फलमभिमतं प्राप्तुमनसा,
निरीहेण स्थातुं क्षणमपि न युक्तं मतिमता।
कुलालो दण्डेन भ्रमयति न चेच्चक्रमनिशम्,
शरावः कुम्भो वा न हि भवति सत्यामपि मृदि।।
हरिभट्ट

---

१०३५. ये सबसे बढ़कर स्नेही हैं--यह देखकर क्षुद्रों पर विश्वास न कर लेना। काम बन जाने पर इनका स्नेह भी आँसू गिरवायेगा।

१०३६. दरिद्र का शरीर-पंजर कभी का छिन्न-भिन्न हो गया होता, यदि कहीं कल्पना के राजत्व की रस्सियों से मजबूती से न बाँधा गया होता।

१०३७. धन नहीं संग्रह किया गया, न विद्या प्राप्त की गई, न तप किया गया और सारा जीवन बीत गया।

१०३८. छोटा या बड़ा अभीष्ट फल पाने की इच्छा वाले मतिमान् पुरुष के द्वारा क्षण भर भी निरीह होकर न बैठा जाय। यदि कुम्हार निरन्तर चक्र को दण्ड से न घुमाये तो मिट्टी रहते हुए भी प्याला या घड़ा नहीं बन सकता।

## अन्योक्तयः

१०३९. ये पूर्वं परिपालिताः फलदलच्छायादिभिः प्राणिनः,
विश्रामद्रुम कथ्यतां तव विपत्काले क्व ते साम्प्रतम् ।
एताः संनिधिमात्रकल्पितपुरस्कारास्तु धन्यास्त्वचः,
यासां छेदनमन्तरेण पतितो नायं कुठारस्त्वयि ।। वित्तोक

१०४०. आश्वास्य पर्वतकुलं तपनोष्मतप्तं
निर्वाप्य दावविधुराणि च काननानि ।
नाना नदीनदशतानि च पूरयित्वा
रिक्तोऽसि यज्जलद सैव तवोन्नतश्रीः ।। वित्तोक

१०४१. न स्फूर्जति न च गर्जति
न च करकाः किरति सृजति न च तडितः ।
न च विनिर्मुंचति वात्यां
वर्षति निभृतं महामेघः ।। अचलसिंह

---

१०३९. हे विश्राम देनेवाले वृक्ष, जो प्राणी फल-दल-छाया आदि से तुम्हारे द्वारा पहले पाले गये थे, वे तुम्हारे काटे जाने के समय कहाँ खिसक गये? तुम्हारी छाल ही धन्य है, जिन्हें तुम्हारे सांनिध्य का पुरस्कार प्राप्त हुआ और अब उनको काटकर ही कुठार तुम्हारे ऊपर गिर सकेगा।

१०४०. हे जलद, सूर्य की गर्मी से झुलसे हुए पर्वत के समूहों को आश्वासन देकर, दावाग्नि से दुःखी वनों को शीतलता प्रदान करके, सैकड़ों नदीनद को भरकर रिक्त हो, यही तुम्हारी सर्वोच्च शोभा है।

१०४१. महामेघ भड़कता नहीं, गर्जता नहीं, ओले नहीं बिखेरता और न बिजली कौंधता है। वह तूफान भी नहीं घहराता। केवल चुपचाप बरसता है।

१०४२. कस्य तृषं न क्षपयसि
न पयसि तव कथय के निमज्जन्ति।
यदि सन्मार्ग-जलाशय
नक्रो न क्रोडमधिवसति ॥ वीर

१०४३. श्रीफलेनामुनैवायं कुरुते किं वानरः।
हसत्युल्लसति प्रेङ्खत्यधस्तादीक्षते जनम् ॥ तरणिनन्दिनः

१०४४. आदाय वारि परितः सरितां शतेभ्यः
किं नाम साधितमनेन महार्णवेन।
क्षारीकृतं च वडवादहने हुतं च
पातालकुक्षिकुहरे विनिवेशितं च ॥

१०४५. हंहो जनाः प्रतिपथं प्रतिकाननं च
तिष्ठन्तु नाम तरवः फलिता नताश्च।
अन्यैव सा स्थितिरहो मलयद्रुमस्य
यद्गन्धमात्रमपि तापमपाकरोति ॥ वल्लण

---

१०४२. हे सन्मार्ग के जलाशय, यदि तुम्हारी गोद में नक्र का वास न होता तो तुम किसकी प्यास न बुझाते और कौन तुम्हारे जल में नहीं नहाता ?

१०४३. श्रीफल से यह वानर क्या नहीं करता ? हँसता है, उल्लास मानता है, झूलता है और लोगों को हीन देखता है।

१०४४. चारों ओर से सैकड़ों नदियों से जल लेकर इस महासागर ने क्या किया ? जल को खारा बनाया, वडवाग्नि में फूँका और पाताल की कोख में डाला।

१०४५. सज्जनो, प्रत्येक पथ और वन में ऐसे वृक्ष हैं, जो फलते और झुकते हैं, मलयद्रुम (चन्दन) की बात कुछ और ही है, जिसकी गन्ध भी ताप को दूर कर देती है।

१०४६. जलकणवितरणरहितः प्रकटितधवलितवेषः।
चातक रटसि वृथा किं जलदः शारद एषः॥ चर्पटीनाथ

१०४७. भ्रातः पंकज संकोचः कंचित्कालं विषह्यताम्।
सैव प्रभाते शोभा ते भाते दिनकरे भवेत्॥ श्रुत

१०४८. चन्दने विषधरान् सहामहे
वस्तु सुन्दरमगुप्तिमत्कुतः।
रक्षितुं वद किमात्मसौष्ठवं
संचिताः खदिर कण्टकास्त्वया॥ भल्लट

## अनुश्रुतानि

१०४९. शिशुरपि रुषा सिंहीसुनुः समाह्वयते गजान्।

१०५०. उत्साहसम्पन्नमदीर्घसूत्रं
क्रियाविधिज्ञं व्यसनेष्वसक्तम्।
शूरं कृतज्ञं दृढसौहृदं च।
लक्ष्मीः स्वयं वाञ्छति वासहेतोः॥

---

१०४६. हे चातक, क्यों व्यर्थ रट लगा रहे हो? जलकण का वितरण न करनेवाला फिर भी धवल वेश बनाये हुए यह शरद् का बादल है।

१०४७. भाई कमल, थोड़ी देर के लिए अपने संकोच को सहो? सूर्य के निकलने पर प्रभात के समय तुम्हारी वही शोभा होगी।

१०४८. चन्दन पर विषधरों का होना तो सहा जाता है। सुन्दर वस्तु अरक्षित कैसे रहे? हे खैर (वृक्ष), अपने किस सौष्ठव की रक्षा के लिए तुमने काँटों को चिपका रखा है?

१०४९. सिंहिनी का पुत्र शिशु होने पर भी हाथियों को ललकारता है।

१०५०. उत्साहसम्पन्न, निरलस, क्रियाविधि जाननेवाले को, व्यसनों में असक्त, शूर, कृतज्ञ और दृढ़ मैत्रीवाले को लक्ष्मी स्वयं अपना आश्रय बनाने के लिए चुन लेती है।

१०५१. अश्वः शस्त्रं शास्त्रं वीणा वाणी नरश्च नारी च।
पुरुषविशेषं प्राप्ता भवन्ति योग्या अयोग्याश्च॥

१०५२. स्वार्थो यस्य परार्थ एव स पुमानेकः सतामग्रणीः॥

१०५३. निन्दन्तु नीतिनिपुणा अथवा स्तुवन्तु
लक्ष्मीः परापततु गच्छतु वा यथेच्छम्।
अद्यैव वा मरणमस्तु युगान्तरे वा
न्याय्यात्पथः प्रचलयन्ति पदं न धीराः॥

१०५४. अपेक्षन्ते न च स्नेहं न पात्रं न दशान्तरम्।
सदा लोकहिते युक्ता रत्नदीपा इवोत्तमाः॥

१०५५. नाभिषेको न संस्कारः सिंहस्य क्रियते वने।
विक्रमार्जितसत्त्वस्य स्वयमेव मृगेन्द्रता॥

१०५६. परसदननिविष्टः को लघुत्वं न याति।

---

१०५१. अश्व, शस्त्र, शास्त्र वीणा, वाणी, पुरुष और स्त्री——ये सभी पुरुष विशेष को पाकर योग्य या अयोग्य होते हैं।

१०५२. जिसके लिए परोपकार करना ही स्वार्थ है, वह मनुष्य सज्जनों में श्रेष्ठ है।

१०५३. नीति-निपुण निन्दा करें या प्रशंसा, लक्ष्मी आये या जाये। आज ही मरण हो या दूसरे युग में हो, धीर न्याय के पथ से डिगते नहीं।

१०५४. उत्तम पुरुष स्नेह, पात्र और दशान्तर पाये बिना भी रत्नदीप की भाँति सदैव लोकहित में लगे रहते हैं। स्नेह=तेल, पात्र= दीया, दशान्तर=नई बत्ती।

१०५५. वन में सिंह का अभिषेक और संस्कार नहीं किया जाता। विक्रम के द्वारा प्राप्त सत्त्व वाले (सिंह) की मृगेन्द्रता अपने आप होती है।



१०५६. दूसरे के घर में जाने पर कौन छोटा नहीं हो जाता?

१०५७. शिरसा धार्यमाणोऽपि सोमः सोमेन शम्भुना।
तथापि कृशतां धत्ते कष्टः खलु पराश्रयः ॥

१०५८. वरममी तरवो वनगोचराः
शकुनिसार्थविलुप्तफलश्रियः।
न तु धनाढ्यगृहाः कृपणाः फणाः
निहितरत्नभुजंगमवृत्तयः ॥

१०५९. गृहमध्यनिखातेन धनेन रमते यदि।
स तु तेनानुसारेण रमते किं न मेरुणा ॥

१०६०. कृपणेन समो दाता न भूतो न भविष्यति।
अस्पृशन्नेव वित्तानि यः परेभ्यः प्रयच्छति ॥

१०६१. दुर्जनः सुजनीकर्तुं यत्नेनापि शक्यते।
संस्कारेण लशुनं कः सुगन्धीकरिष्यति ॥

---

१०५७. उदात्त शम्भु के द्वारा शिर पर धारण किये जाने पर भी चन्द्रमा कृश हो जाता है। पराश्रय कष्टप्रद ही है।

१०५८. हम वन के रहने वाले वृक्ष ही अच्छे हैं। हमारी फलश्री पक्षियों के समूह के द्वारा समाप्त की जाती है। धन भरे हुए घर वाले कृपण नहीं (अच्छे हैं), जो फण में रत्न रखे हुए साँप के समान आचरण करते हैं।

१०५९. घर में गड़े धन से यदि आनन्द प्राप्त करना है तो उसी प्रकार मेरु से क्यों नहीं आनन्द प्राप्त करता ?

१०६०. कृपण के समान दाता न हुआ और न होगा। धन को (अपने काम के लिए) न छूते हुए ही वह उसे दूसरों के लिए छोड़ देता है।

१०६१. प्रयत्न से दुर्जन को सुजन नहीं बनाया जा सकता। लशुन को संस्कार से कौन सुगन्धित बना सकता है।

१०६२. दुर्जनेनोच्यमानानि वचांसि मधुराण्यपि ।
अकालकुसुमानीव त्रासं संजनयन्ति मे ।।

१०६३. सदा वक्रः सदा क्रूरः सदामानधनापहः ।
कन्याराशिस्थितो नित्यं जामाता दशमो ग्रहः ।।

१०६४. का नाम बुद्धिहीनस्य विधेस्तस्य विदग्धता ।
कुष्माण्डेषु न यश्चक्रे तैलमूर्णां च दन्तिषु ।।

१०६५. सकषायस्य चित्तस्य काषायैः किं प्रयोजनम् ।

१०६६. नक्रः स्वस्थानमासाद्य गजेन्द्रमपकर्षति ।
स एव प्रच्युतः स्थानाच्छुनापि परिभूयते ।।

१०६७. अस्ति यद्यपि सर्वत्र नीरं नीरजमण्डितम् ।
रमते न मरालस्य मानसं मानसं विना ।।

१०६८. एक एव खगो मानी वने वसति चातकः ।
पिपासितो वा म्रियते याचते वा पुरन्दरम् ।।

---

१०६२. दुर्जन के द्वारा कहे हुए मधुर वचन भी अकाल कुसुम की भाँति मुझे डराते हैं।

१०६३. सदा वक्र, क्रूर, मान और धन हरने वाला जामाता दसवाँ ग्रह है, जो नित्य कन्या-राशि में स्थित रहता है।

१०६४. उस बुद्धिहीन विधाता की चतुरता को क्या कहें, जिसने कुम्हड़े में तेल और हाथी में ऊन न दिया।

१०६५. कषायपूर्ण चित्त के लिए काषाय वस्त्र की क्या आवश्यकता ?

१०६६. मगर अपने स्थान को पाकर हाथी को भी खींच लेता है। वही अपने स्थान से अलग होने पर कुत्ते से भी पराजित होता है।

१०६७. यद्यपि कमल से मण्डित जल सर्वत्र है (फिर भी) हंस का मन मानस-सरोवर के बिना नहीं रमता।

१०६८. वन में एक ही मानी पक्षी चातक बसता है। वह प्यासे ही भले मर जाता है पर केवल इन्द्र की याचना करता है।

१०६९. आदाय मांसमखिलं स्तनवर्जमङ्गात्
मां मुंच वागुरिक याहि कुरु प्रसादम्।
अद्यापि घासकवलग्रसनानभिज्ञः
मन्मार्गवीक्षणपरस्तनयो मदीयः॥

१०७०. मत्स्या अपि हि जानन्ति क्षीरनीरविवेचनम्।
प्रसिद्ध राजहंसानां यशः पुण्यैरवाप्यते॥

१०७१. कमलं भवनं रजोऽङ्गरागो
मधुपानं मधुराः प्रियाप्रलापाः।
शयनं मृदुकेसरोपधानं
भ्रमरस्याम्भसि का न राजलीला॥

१०७२. प्रीणाति यः सुचरितैः पितरं स पुत्रः।

१०७३. अतिपरिचयादवज्ञा भवति विशिष्टेऽपि वस्तुनि प्रायः।
लोकः प्रयागवासी कूपस्नानं सदाचरति॥

१०७४. दूरस्थस्य महार्घता परिभवः संवासतो जायते।

---

१०६९. हे व्याध, स्तन को छोड़कर मेरा सभी मांस ले लो। मुझे छोड़ दो, जाओ, कृपा करो। आज भी मेरा एक पुत्र है, जो घास का कवल खाना नहीं जानता। वह मेरी राह देख रहा है।

१०७०. मछली भी नीर-क्षीर विवेचन जानती हैं। पर यह (नीर-क्षीर विवेक) राजहंसों का यश प्रसिद्ध है। यश भी पुण्यों से ही मिलता है।

१०७१. भ्रमर के लिए पानी में कौन सी राजलीला नहीं है—भवन कमल है, अंगराग पुष्परज है, पीने के लिए मधु है, साथ ही प्रिया-प्रलाप है और शयन के लिए मृदु केसरोपधान है।

१०७२. सुचरितों से जो पिता को प्रसन्न करता है, वही पुत्र है।

१०७३. अतिपरिचय से विशिष्ट वस्तुओं के प्रति भी अनादर होता है। प्रयागवासी लोग सदा कूप स्नान करते हैं। (गंगा स्नान नहीं।)

१०७४. दूर रहने वाले का मूल्य बढ़ता है और साथ रहने से अनादर होता है।

१०७५. वह्निः समुद्भवति निर्मथनेन काष्ठा—
दम्भो ददाति वसुधा च निखन्यमाना।
गच्छन् प्रयास्यति शनैरपि चाध्वनोन्तम्,
आरब्धकार्य इह किं न नरः करोति॥

१०७६. दानं न दत्तं न तपश्च तप्तं नाराधितौ शङ्करवासुदेवौ।
अग्नौ रणे वा न हुतश्च कायः शरीर किं प्रार्थयसे सुखानि॥

१०७७. धन्यास्ते ये न पश्यन्ति देशभङ्गं कुलक्षयम्।

१०७८. शशिनि किल कलङ्कः कण्टकं पद्मनाले
गुणवति विधनत्वं चन्दने कृष्णसर्पाः।
उदधिजलमपेयं निर्मितं येन लोके
स जगति खलु दृष्टो निर्विवेको विधाता॥

१०७९. परीक्ष्य सत्कुलं विद्यां वयः शौर्यं सुशीलताम्।
विधिर्ददाति निपुणः कन्यामिव दरिद्रताम्॥

---

१०७५. काठ को मथने से आग उत्पन्न होती है। खोदने से पृथ्वी जल देती है। चलते रहने से मार्ग के अन्त तक शनैः शनैः पहुँच जाता है। काम का आरम्भ करने वाला पुरुष यहाँ क्या नहीं कर लेता ?

१०७६. दान नहीं दिया, तप नहीं किया गया, शंकर और वासुदेव की आराधना नहीं की गई, आग में या युद्ध में होम नहीं कर दिया गया—ऐसे शरीर ! तुम सुख क्यों चाहते हो ?

१०७७. वे धन्य हैं, जो देश का विभाजन और कुल का क्षय नहीं देखते।

१०७८. चन्द्रमा में कलंक, कमलनाल में कण्टक, गुणवानों की निर्धनता, चन्दन में काला साँप, समुद्र का अपेय जल—इन सबका संसार में जिस विधाता के द्वारा निर्माण किया गया वह विधाता विवेक रहित है।

१०७९. अच्छा कुल, विद्या, वय, शौर्य और सुशील की परीक्षा करके निपुण दैव कन्या की भाँति दरिद्रता का दान करता है।

१०८०. भानुः भ्राम्यति यद्वशेन गगने तस्मै नमः कर्मणे।
१०८१. छायाचंचलमाकलय्य सकलं सन्तो वनान्तं गताः॥
१०८२. सम्पदः जलतरङ्गविलोला
यौवनं त्रिचतुराणि दिनानि।
शारदाभ्रपरिचञ्चलमायुः
किं धनैः परहितानि कुरुध्वम्॥
१०८३. करिष्यामि करिष्यामि करिष्यामीति चिन्तया।
मरिष्यामि मरिष्यामि मरिष्यामीति विस्मृतम्॥
१०८४. श्वः कार्यमद्य कुर्वीत पूर्वाह्ने चापराह्णिकम्।
न हि प्रतीक्षते मृत्युः कृतमस्य न वा कृतम्॥
१०८५. अनित्यते जगन्निन्द्ये वन्दनीयासि सम्प्रति।
या करोषि प्रसङ्गेन दुःखानामप्यनित्यताम्॥

---

१०८०. जिसके वश में होकर सूर्य आकाश में नचाया जाता है, उस कर्म को नमस्कार।

१०८१. सब कुछ छाया की भाँति चंचल देखकर सन्त वन में चले गये।

१०८२. सम्पत्तियाँ पानी की लहरों की भाँति चंचल हैं, यौवन दो-चार दिन का है। शरद् के बादल की भाँति चंचल आयु है, धन से क्या परहित करें?

१०८३. करूँगा, करूँगा, करूँगा—इसी चिन्ता में मरना है—यह तो भूल ही गया।

१०८४. कल का काम आज और अपराह्ण का काम पूर्वाह्ण में कर डालो मृत्यु प्रतीक्षा नहीं करता कि तूमने क्या कर लिया और तुम्हारे करने के लिए क्या शेष रहा।

१०८५. हे संसार के द्वारा निन्द्य अनित्यते, सम्प्रति तुम वन्दनीय हो, तुम जो प्रसंगतः दुःखों को भी अनित्य बनाती हो।

१०८६. सेवा श्ववृत्तिर्यैरुक्ता तैर्न सम्यगुदाहृतम्।
स्वच्छन्दचारी कुत्र श्वा विक्रीतासुः क्व सेवकः॥

१०८७. तृणादपि लघुस्तूलस्तूलादपि च याचकः।
वायुना किं न नीतोऽसौ मामपि प्रार्थयेदिति॥

१०८८. लक्ष्मीर्विनयभूषणा।

१०८९. विद्वत्वं च नृपत्वं च नैव तुल्यं कदाचन।
स्वदेशे पूज्यते राजा विद्वान् सर्वत्र पूज्यते॥

१०९०. शय्या शाद्वलमासनं शुचिशिला सद्म द्रुमाणामधः
शीतं निर्झरवारि पानमशनं कन्दाः सहाया मृगाः।
इत्यप्रार्थितसर्वलभ्यविभवे दोषोऽयमेको वने
दुष्प्रार्थिनि यत्परार्थघटना बन्ध्यैर्वृथा स्थीयते॥

---

१०८६. जिन्होंने कहा कि सेवा वृत्ति कुत्ते की वृत्ति है, उन्होंने ठीक नहीं कहा। कहाँ तो स्वाधीन विचरण करनेवाला कुत्ता और कहाँ बिके प्राणवाला सेवक।

१०८७. तिनके से हलकी रूई और रूई से भी हलका याचक होता है। इसको हवा क्यों न उड़ा ले गई कि मेरे पास आया?

१०८८. विनय लक्ष्मी का भूषण है।

१०८९. विद्वत्ता और राजपद दोनों कभी बराबर नहीं हैं। राजा स्वदेश ही में और विद्वान् सर्वत्र पूजा जाता है।

१०९०. घासकी शय्या, पवित्र शिला का आसन, वृक्षों के नीचे घर, पीने के लिए शीतल सोते का जल, भोजन के लिए कन्द और साथ के लिए मृग—ये सभी विभव वन में विना माँगे ही मिल जाते हैं। वहाँ एक ही दोष है—याचक कठिनाई से मिलते हैं, अतः वहाँ रहना व्यर्थ है क्योंकि परोपकार करना सम्भव नहीं।

१०९१. यद्ददासि विशिष्टेभ्यो यदश्नासि दिने दिने।
तत्ते वित्तमहं मन्ये शेषं कस्यापि रक्षसि॥

१०९२. आतुराद्वित्तहरणं मृतादपि पलायनम्।
एतद्वैद्यस्य वैद्यत्वं न वैद्यः प्रभुरायुषः॥

१०९३. रत्नान्यधो नयति जातगुरूणि मोहात्,
ऊर्ध्वं सदा वहति काष्ठतृणं समुद्रः।
तोयानि दूषयति पाति भुजंगलोकम्,
प्रायो महान्भवति कार्यविमूढचेताः॥

१०९४. विजितात्मनां जानानामभवद्यः कृतयुगे दमो नाम।
सोयं विपरीततया मदः स्थितः कलियुगे॥

१०९५. आत्मैव यदि नात्मानमहितेभ्यो निवारयेत्।
कोऽन्यो हिततरस्तस्माद्य एनं विनिवारयेत्॥

---

१०९१. जो विशिष्ट लोगों के लिए देते हो, जिसे प्रतिदिन खाते हो, उसे ही तुम्हारा धन मानता हूँ। शेष किसी दूसरे का है, जिसकी तुम रक्षा करते हो।

१०९२. आतुर से धन हरना, मरे से भी दूर भागना—यही तो वैद्य का वैद्यत्व है। वैद्य आयु का प्रभु थोड़े हैं।

१०९३. समुद्र श्रेष्ठ रत्नों को मोह से नीचे कर देता है। सदा ही काठ और तिनके को ऊपर रखता है। पानी को दूषित बना देता है, साँपों की रक्षा करता है। अपने काम में मूढ़ चित्त वाला भी प्राय महान् बन जाता है।

१०९४. सत्ययुग में आत्मवशी लोगों का जो दम होता था, वही कलि-युग के विपरीत होने पर मद बन गया।

१०९५. यदि अपने आप ही अपने को अहित से नहीं हटाता तो दूसरा कौन बढ़कर हितकारी है, जो उसको हटाये।

१०९६. क्रोधमेव तु यो हन्ति तेन सर्वे द्विषो हताः।

१०९७. न देवचरितं चरेत्।

१०९८. छायां कुर्वन्ति चान्यस्य तापं तिष्ठन्ति वातपे।
फलन्ति च परार्थाय पादपा इव सज्जनाः॥

१०९९. लक्ष्मीं तृणाय मन्यन्ते तद्भरेण नमन्ति च।
अहो किमपि चित्राणि चरित्राणि महात्मनाम्॥

११००. क्वाकारणरुषां संख्या संख्याताः कारणक्रुधः।
कारणेऽपि न कुप्यन्ति ये ते जगति पंचषाः॥

११०१. परगुणतत्त्वग्रहणं स्वगुणावरणं परव्यसनमौनम्।
मधुरमशठं च वाक्यं केनाप्युपदिष्टमार्याणाम्॥

---

१०९६. जो क्रोध को मिटा देता है, उसके द्वारा सभी शत्रु समाप्त कर दिये गये।

१०९७. देवताओं का (बिना समझे-बूझे) अनुकरण न करे।

१०९८. वृक्षों की भाँति सज्जन दूसरे के लिए छाया करते हैं, स्वयं धूप में रहकर गर्मी सहते हैं और दूसरे के लिए फल देते हैं।

१०९९. धन को तण की भाँति मानते हैं, उसके भार से झुक जाते हैं। अहो, महात्माओं का चरित्र भी क्या ही विचित्र है!

११००. बिना कारण के रोष करनेवाले की संख्या कहाँ (सीमित है)। कारण होने पर क्रोध करनेवाले गिनती भर के हैं। जो कारण होने पर भी क्रोध नहीं करते, उनकी संख्या तो पाँच, छः ही है।

११०१. दूसरे के गुण के तत्त्वों को ग्रहण कर लेना, अपने गुण को छिपाये रखना, दूसरे की विपत्ति में मौन रहना, मीठी और सरल बात कहना—यह किसने आर्यों को सिखाया?

११०२. यशो रक्षन्ति न प्राणान् पापाद्बिभ्यति न द्विषः।
अन्विष्यन्त्यर्थिनो नार्थान्निसर्गोऽयं महात्मनाम्॥

११०३. अयं निजः परो वेति गणना लघुचेतसाम्।
उदारचरितानां तु वसुधैव कुटुम्बकम्॥

११०४. सद्गुणालङ्कृते काव्ये दोषान् मृगयते खलः।
वने पुष्पफलाकीर्णे करभः कण्टकानिव॥

११०५. निर्गुणमप्यनुरक्तं प्रायो न समाश्रितं जहति सन्तः।
सहवृद्धिक्षयभाजं वहति शशाङ्कः कलङ्कमपि॥

११०६. अस्थानाभिनिवेशी प्रायो जड एव भवति नो विद्वान्।
बालादन्यः कोऽम्भसि जिघृक्षतीन्दोः स्फुरद्बिम्बम्॥

---

११०२. यश की रक्षा करते हैं, प्राणों की नहीं। पाप से डरते हैं, शत्रु से नहीं। याचकों को ढूँढ़ते हैं, धन को नहीं—यही महात्माओं का स्वभाव है।

११०३. यह मेरा या दूसरे का है—यह छोटे विचार वालों की बात है। उदार व्यक्तियों के लिए तो सारी पृथ्वी ही कुटुम्ब है।

११०४. अच्छे गुणों से अलंकृत काव्य में खल दोष ढूंढ़ते हैं, जैसे ऊँट पुष्प और फल से समायुक्त वन में काँटे ढूँढ़ते हैं।

११०५. निर्गुण होने पर भी आश्रय लिए हुए अनुरक्त को सज्जन छोड़ते नहीं। साथ ही बढ़ने और घटने वाले कलंक को चन्द्र लिए रहता है।

११०६. केवल मूर्ख ही अनुचित स्थान में किसी वस्तु के लिए आग्रह करता है। बच्चे को छोड़कर और कौन पानी में चन्द्रबिम्ब पकड़ने की इच्छा करता है?

११०७. पीताम्बराय तनयां प्रददौ पयोधिः
तत्कालकूटगरलं च दिगम्बराय।
तत्रानयोर्वदत कस्य गुणातिरेकः
प्रायः परिच्छदकृतादर एव लोकः॥

११०८. येनैवाम्बरखण्डेन दिवा संचरते रविः।
तेनैव निशि शीतांशुरहो दौर्गत्यमेतयोः॥

११०९. कामं वनेषु हरिणास्तृणेन जीवन्त्ययत्नसुलभेन।
विदधति धनिषु न दैन्यं ते किल पशवो वयं सुधियः॥

१११०. लभन्ते कथमुत्थानमस्थानं गुणिनो गताः।
दृष्टः किं क्वापि केनापि कर्दमात्कन्दुकोद्गमः॥

---

११०७. पीत वस्त्रधारी विष्णु को तो समुद्र ने अपनी कन्या लक्ष्मी प्रदान की पर दिगम्बर शिव के लिए कालकूट विष दिया। इन दोनों में किसका गुण अधिक है, तुम्हीं बताओ। प्रायः संसार वस्त्र का ही आदर करता है।

११०८. जिस अम्बर खण्ड (कपड़े के टुकड़े) से दिन में सूर्य काम चलाता है, उसी से रात में चन्द्र काम चलाता है। इनकी भी क्या दुर्गति है।

११०९. अनायास ही पाये हुए तृण से वन में हरिण जीवन बिताते हैं। किसी धनी के सामने दुखड़ा नहीं रोते। फिर वे तो पशु हैं और हम लोग जो सुधी हैं!

१११०. अनुचित स्थान में गये हुए गुणी जन कैसे उत्थान प्राप्त करेंगे? क्या कहीं किसी ने कीचड़ से कन्दुक को ऊपर उछलते देखा है?

११११. उपैति क्षाराब्धिं सहति बहुवातव्यतिकरम्,
पुरो नानाभङ्गाननुभवति पश्यैष जलदः।
कथं चिल्लब्धानि प्रवितरति तोयानि जगते,
गुणं वा दोषं वा गणयति न दानव्यसनिता ॥

१११२. शुक्लीकरोति मलिनानि दिगन्तराणि
चन्द्रो न शुक्लयति चात्मगतं कलङ्कम्।
नित्यं परार्थघटनाहितमानसानां
स्वार्थोद्यमो भवति नो महतां कदाचित् ॥

१११३. मूर्धेन्दुः परमेश्वरेण विधृतो वक्रो जडात्मा क्षयी
कर्णान्ते च परापकारचतुरो न्यस्तो द्विजिह्वाधिपः।
नान्दी द्वारि बहिष्कृतो गुणनिधिः कष्टं किमत्रोच्यताम्,
पात्रापात्रविचारणास्वनिपुणः प्रायो भवेदीश्वरः ॥

१११४. कुहकचकितो लोकः सत्येऽप्यपायमवेक्षते।

---

११११. यह बादल खारे पानी के पास जाता है, झंझावात के थपेड़ों को सहता है। फिर अनेकों भङ्गों का अनुभव करता है। फिर जो पानी किसी-किसी प्रकार पाया तो संसार के लिए वितरण कर देता है। दान की व्यसनशीलता गुण या दोष नहीं गिनती।

१११२. चन्द्रमा मलिन दिशाओं को निर्मल कर देता है। पर अपने कलंक को साफ नहीं कर देता। महापुरुष परोपकार में मन लगाये रहते हैं। कभी स्वार्थ के लिए श्रम नहीं करते।

१११३. शिव के द्वारा सिर पर वक्र, जडात्मा और क्षयी चन्द्रमा रखा गया। कान के पास परापकार में चतुर नागराज प्रतिष्ठित किया गया। गुणोत्तम नन्दी बाहर करके द्वार पर बैठाया गया। कष्ट की बात है, क्या कहा जाय ? पात्र और अपात्र के विचार में प्रायः ईश्वर निपुण नहीं होते।



१११४. धोखे से विस्मित लोग सत्य में भी हानि देखते हैं।

११९५. यद्यपि का नो हानिः परकीयां चरति रासभो द्राक्षाम्।
असमञ्जसमिति मत्वा तथापि परितप्यते चेतः॥

१११६. क्वापि कस्य च कुतोऽपि कारणात्
चित्तवृत्तिरिह किं गुणागुणैः।
उन्नतं यदवधीर्य भूधरं
नीचमब्धिमभियासि जाह्नवी॥

१११७. विद्यते स न हि कश्चिदुपायः सर्वलोकपरितोषकरो यः।

## पुरुषपरीक्षा

१११८. तृष्णे देवि नमस्तुभ्यं कृतकृत्यासि साम्प्रतम्।
अनन्तनाम यद्रूपं तत्त्वया वामनीकृतम्॥

१११९. वीरः सुधीः सुविद्यश्च पुरुषः पुरुषार्थवान्।
तदन्ये पुरुषाकाराः पशवः पुच्छवर्जिताः॥ १.४

११२०. सिंहाः सत्पुरुषाश्चैव निजदर्पोपजीविनः॥ ३.२

---

१११५. दूसरे के दाख को यदि गधा चरे तो कोई हानि अपनी नहीं होती। फिर भी यह ठीक नहीं—यह मानकर चित्त सन्तप्त हो जाता है।

१११६. कहीं भी किसी कारण से यहाँ यह चित्तवत्ति है—गुण और दोष से क्या जब ऊँचे पर्वत को छोड़कर नीचे समुद्र की ओर गंगा जाती है।

१११७. कोई उपाय ऐसा नहीं है, जो सभी लोगों के परितोष के लिए हो।

१११८. हे तृष्णा देवि, तुम्हें नमस्कार। तुम अब कृतकृत्य हो। जो विष्णु अनन्त रूप वाला, है, वह भी तुम्हारे द्वारा वामन बना दिया गया।

१११९. वीर, सुधी, सुविद्य और पुरुषार्थी ही पुरुष हैं। उनके अतिरिक्त लोग केवल पुरुषाकार पशु हैं, वे भी पुंछ रहित।



११२०. सिंह और सत्पुरुष अपने दर्प का अवलम्बन लेकर जीते हैं।

११२१. वस्तुदोषमनादृत्य गुणान् चिन्वन्ति तद्विदः।
अपि कण्टकिनः पुष्पे गन्धं जिघ्रन्ति षट्पदाः।। ९.४

११२२. धिया विहीनो नहि याति धन्यताम्।। १३.६

११२३. उत्तमं हि धनं विद्या दीयमानं न हीयते। १५.३

११२४. विद्या नाटकसंज्ञिका भगवती विश्वोपकारक्षमा। २१.६

११२५. मृषा वदति लोकोऽयं ताम्बूलं मुखभूषणम्।
मुखस्य भूषणं पुंसः स्यादेकैव सरस्वती।। २६.३

११२६. परप्राणपरित्राणात्परो धर्मो न विद्यते। २९.२

## गान्धि-सूत्राणि

११२७. सत्यस्वरूपः सर्वेश्वरः। ४

११२८. प्रेमैव परं रूपमहिंसायाः। २१

११२९. हिंसापि क्लैब्यात् श्रेयसी। २७

---

११२१. किसी वस्तु के दोष का ध्यान न करते हुए विद्वान् उनके गुणों को ग्रहण कर लेते हैं। भौंरा काँटे वाले पौधे के गन्ध का उपयोग कर लेता है।

११२२. बुद्धिहीन धन्य नहीं होता।

११२३. विद्या उत्तम धन है। देने पर कम नहीं होती।

११२४. नाटक नामक विद्या भगवती सबका उपकार करने में समर्थ है।

११२५. झूठ ही लोग कहते हैं कि पान मुख का भूषण है। पुरुष के मुख का भूषण एक सरस्वती ही है।

११२६. दूसरे के प्राण की रक्षा से बढ़कर धर्म नहीं है।

११२७. सर्वेश्वर सत्य-स्वरूप है।

११२८. प्रेम ही अहिंसा का परम रूप है।

११२९. नपुंसकता से तो हिंसा ही अच्छी है।

११३०. यावद्दुःखं सहते तावदुपकरोति। ३१

११३१. उद्वाहोऽपि प्रजार्थं न तु कामोपभोगाय। ३८

११३२. धनस्य संचयो हि दुरितस्य संचयः। ३९

११३३. सर्वदा सर्वत्र सेवितव्यो दरिद्रनारायणः। ४०

११३४. माननीयाः खलु कृषीवलाः। ४१

११३५. तन्तुचक्रं हि मूलाधारम्। ४४

११३६. ग्रामाभ्युदयादेव देशाभ्युदयः। ४६

११३७. सत्यं शीलं दमस्स्थैर्यं निर्भयत्वं च नम्रता।
ऐकमत्यं शमस्त्यागस्सहिष्णोस्सहजा गुणाः ॥ ७६

११३८. धर्मात्मा राजनीतिषु धर्ममेवाचरति। ८४

११३९. सत्याग्रह एव शस्त्रं भारतीयानाम्। १०४

११४०. सत्ययुगं शनैरभ्येति जगत्सर्वम्। १०६

---

११३०. जब तक दुःख सहता है, तब तक उपकार करता है।

११३१. विवाह भी सन्तान के लिए है, कामोपभोग के लिए नहीं।

११३२. धन का संचय पाप का संचय है।

११३३. सदा सर्वत्र ही दरिद्र के रूप में नारायण की सेवा करो।

११३४. किसान आदरणीय हैं।

११३५. चर्खा ही (ग्रामोन्नति) का मूलाधार है।

११३६. गाँवों के अभ्युदय से ही देश का अभ्युदय है।

११३७. सत्य, शील, दम, स्थिरता, निर्भयता, नम्रता, एकमति, शम और त्याग सहिष्णु के सहज गुण हैं।

११३८. धर्मात्मा राजनीति में धर्म का आचरण रखता है।

११३९. सत्याग्रह ही भारतवासियों का शस्त्र है।

११४०. धीरे-धीरे सारे संसार में सत्य का युग होगा।

११४१. तन्मार्गदर्शि भारतवर्षम्। १०७
११४२. दिक्कालाद्यनवच्छिन्नस्सनातनोऽयं धर्मः।

## भारतपारिजातम्

११४३. मूले लब्धफलः को वा प्रारोहति तरोः शिरः। ४०.६
११४४. स्वार्थस्य राज्ये प्रसृते विचिन्तनं
हानेः परार्थस्य न कुर्वते जनाः। ५.४४
११४५. निर्व्याजतायाः परिपोषणेऽपि
भाव्यं सदा धीरतयाऽप्रमत्तैः। ६.९
११४६. अस्मिन्युगे यन्त्रगतिप्रचारे
प्रायेण सारल्यमितो विनष्टम्। ६.१०
११४७. न यत्र वृत्तिः खलु धार्मिकी स्यात्
कार्ये च तस्मिन्नहि सिद्धिरस्ति। ६.१७
११४८. दैवेन संवर्धितगौरवस्य तदेव रक्षां सततं करोति।

---

११४१. सत्ययुग का मार्ग दिखाने वाला भारत है।
११४२. यह सनातन धर्म दिशा, काल आदि से सीमित नहीं है।
११४३. जड़ में ही फल पाने वाला कौन वृक्ष की चोटी पर चढ़ता है।
११४४. स्वार्थ का राज्य फैलने पर लोग दूसरे की हानि की चिन्ता नहीं करते।
११४५. निष्कपटता के पालन में भी सदा धैर्यपूर्वक सावधान रहना चाहिए।
११४६. इस यन्त्र के प्रचलन के युग में प्रायः सरलता यहाँ से नष्ट हो गई है।
११४७. जिस काम में धार्मिक वृत्ति न हो, उसमें सिद्धि नहीं होती।
११४८. दैव जिसके गौरव को बढ़ाता है, वह सदैव उसकी रक्षा भी करता है।

११४९. समयं मतिमानुपस्थितं ह्युपयुंक्ते न च कः समृद्धये। ७.५५

११५०. यः स्वात्मशक्तिमनुसृत्य युधं विधत्ते।
स्यादेव तस्य नितरां विजयो महीयान् ८.३४

११५१. सत्यं निवारयति सर्वसुखप्रतीपम्। ८.३७

११५२. शान्तिप्रिया भारतवासितुल्याः
प्रजा पृथिव्यां न हि सम्भवेयुः। ९.२३

११५३. आत्मप्रतीतिः दृढता विरक्तिः
इति त्रयं स्वात्मनि यो दधीत।
नेता स एवास्ति समस्तशिष्ट-
गुणाश्रयत्वान्निखिलप्रजानाम् १२.३५

११५४. प्राणाधिकं गौरवमेव हृद्यम्। १२.३९

११५५. एतावतैव कार्येण मन्यध्वं नो कृतार्थताम्।
कर्तव्यानां परा काष्ठा नेदानीं विद्यते खलु॥ १४.२०

---

११४९. उपस्थित समय का कौन बुद्धिमान् अपनी समृद्धि के लिए उपयोग नहीं करता।

११५०. जो अपनी आत्मिक शक्ति का अनुसरण करके युद्ध करता है, उसको महान् विजय अवश्य मिलती है।

११५१. सत्य सुख के मार्ग में आने वाली सभी बाधाओं को दूर करता है।

११५२. भारतवासियों की भाँति शान्तिप्रिय प्रजा पृथिवी में नहीं सम्भव है।

११५३. आत्मविश्वास, दृढता, विराग—ये तीन गुण जो पुरुष अपने में रखता हो, वही सभी उदात्तगुणों का आश्रय होने के कारण सारी प्रजा का नेता है।

११५४. गौरव ही प्राण से बढ़कर मनोरम है।

११५५. इतने ही काम से अपने को कृतार्थ न समझो। कर्तव्यों की अन्तिम सीमा अब कहाँ रही?

११५६. परं तु परमैः स्वेष्टं विना दुःखैर्न चाप्यते। २०.९७

११५७. क्षुधितजनसुखायागम्य एष प्रदेशः।
किमपि किमपि पुण्यं कार्यमेवात्र भूमौ॥ १२.२१

११५८. भेदभावो विपत्तीनां सदा सद्भाववर्धकः।
तस्मात्तस्य विनाशः स्याच्छान्तिलाभाय सर्वथा॥ २४.४८

## लौकिकन्यायाञ्जलिः

११५९. अकाले कृतमकृतं स्यात्।

११६०. अंगुल्यग्रे हस्तियूथमास्ते

११६१. अन्तरंगबहिरंगयोरन्तरंगं बलीयः।

११६२. अप्राप्ते शास्त्रमर्थवत्।

११६३. अभ्यर्हितं पूर्वम्।

---

११५६. अपना उच्च अभीष्ट अत्यधिक दुःख उठाये बिना नहीं मिलता।

११५७. इस देश में भूखों को सुख देने के लिए ही आना चाहिए। यहाँ कुछ न कुछ पुण्य करना चाहिए।

११५८. भेदभाव विपत्तियों की सत्ता को सदा बढ़ाता है। इसीलिए भेदभाव का विनाश शान्तिलाभ के लिए पूर्णरूप से होना चाहिए।

११५९. असमय में किया हुआ न किया हुआ ही है।

११६०. नख पर हजार हाथी बैठे।

११६१. अन्तरंग और बहिरंग में अन्तरंग अधिक बलवान् है।

११६२. अभिप्राय समझ में न आये तो शास्त्र की बात सोचो।

११६३. आदरणीय को पहले रखें।

११६४. अम्बुनि मज्जन्त्यलाबूनि ग्रावाणः प्लवन्ते।

११६५. एकदेशविकृतमनन्यवत्।

११६६. किं चक्षुषा ममैतेन दृष्टं दीपेन यन्मया।

११६७. ज्ञानमज्ञानस्यैव निवर्तकम्।

११६८. तत्स्थानापन्ने तद्धर्मलाभः।

११६९. तप्तं तप्तेन सम्बध्यते।

११७०. नहि करकंकणदर्शनायादर्शापेक्षा।

११७१. नहि काकिन्यां नष्टायां तदन्वेषणं कार्षापणेन क्रियते।

११७२. नहि गोधा सर्पन्ती सर्पणादहिर्भवति।

११७३. भिक्षुको भिक्षुकान्तरं याचितुमर्हति सत्यन्यस्मिन्नभिक्षुके।

११७४. नहि विधिशतेनापि तथा पुरुषः प्रवर्तते यथा लोभेन।

---

११६४. पानी में लौकी डूबती है और पत्थर तैरता है।

११६५. एक भाग के विकृत होने पर वस्तु बदल नहीं जाती।

११६६. मुझे इस आँख से क्या, जब दीपक से ही देखा गया?

११६७. ज्ञान केवल अज्ञान को ही दूर करता है।

११६८. जिसका स्थान लिया जाता है, उसका उत्तरदायित्व भी लिया जाता है।

११६९. दो तपी हुई वस्तुयें ही परस्पर जुटती हैं।

११७०. हाथ कंगन को आरसी क्या?

११७१. कौड़ी गुम होने पर उसे खोजने के लिए रुपये नहीं लगाते।

११७२. रेंगनेवाली गोह सर्पण मात्र से साँप नहीं बन जाती।

११७३. कोई भिक्षुक दूसरे भिक्षुक से तब तक याचना नहीं करता, जब तक कोई दूसरा अभिक्षुक वहाँ हो।

११७४. सैकड़ों आज्ञाओं से मनुष्य काम में उतनी तत्परता से नहीं जुटता, जितना लोभ से।

११७५. नहि स्वतोऽसती शक्तिः कर्तुंमन्येन शक्यते।
११७६. न ह्यन्धस्याज्यावेक्षणोपेते कर्मण्यधिकारोऽस्ति।
११७७. निरामयस्य किमायुर्वेदविदः।
११७८. पश्यस्यद्रौ ज्वलदग्निं न पुनः पादयोरधः।
११७९. पाटनमन्तरेण विषव्रणानां नोपशान्तिः।
११८०. प्रत्यक्षे किमनुमानेन ?
११८१. प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते।
११८२. बालस्य प्रदीपकलिकाक्रीडयैव नगरदाहः।
११८३. मधु पश्यसि दुर्बुद्धे प्रपातं नानुपश्यसि।
११८४. य एव करोति स एव भुंक्ते।
११८५. यत्करभस्य पृष्ठे न माति तत्कण्ठे निबध्यते।

---

११७५. जो शक्ति स्वयं अपने में नहीं, उसे दूसरा कहाँ से दे सकता है ?
११७६. अन्धे से मक्खन की परीक्षा नहीं कराते
११७७. नीरोग को वैद्यराज से क्या लेना देना ?
११७८. पर्वत पर जलती आग देखते हो किन्तु पैर के नीचे की नहीं देखते।
११७९. विषैले घाव को चीरने से ही शान्ति होती है।
११८०. वस्तु के सामने होने पर अनुमान से क्या ?
११८१. बिना प्रयोजन के मूर्ख भी किसी काम में हाथ नहीं लगाता।
११८२. लड़के के दीप-बत्ती के खेल से ही नगर जल गया।
११८३. मूर्ख, मधु तो देखते हो, पर उसके लिए आवश्यक प्रपात को नहीं देखते हो।
११८४. जो करता है, वही भोगता है।
११८५. जो ऊँट की पीठ पर नहीं लद पाता, उसे उसके कण्ठ में बाँध देते हैं।

११८६. यत्राकृतिस्तत्र गुणाः।
११८७. यस्य नास्ति पुत्रो न तस्य पुत्रस्य क्रीडनानि क्रीयन्ते।
११८८. रोहणाचललाभे रत्नसम्पदः सम्पन्नाः।
११८९. विषकुम्भं पयोमुखम्।
११९०. श्वः कार्यमद्य कुर्वीत
११९१. श्वा कर्णे वा पुच्छे वा छिन्ने श्वैव भवति नाश्वो न गर्दभः।
११९२. सर्वं बलवतः पथ्यम्।
११९३. अनिषिद्धमनुमतम्।
११९४. इतो व्याघ्र इतस्तटी।
११९५. क्वोष्ट्रः क्व च नीराजना।
११९६. दत्तमेकधा सहस्रगुणमुपलभ्यते।
११९७. महति दर्पणे महन्मुखं तदेवकनीनिकायामणु।

---

११८६. स्वरूपवान् सच्चरित्र होता है।
११८७. जिसके पुत्र ही नहीं, वह पुत्र से कहाँ से खेलेगा ?
११८८. रोहण पर्वत पर चढ़ने से ही रत्न-सम्पत्तियों की प्राप्ति होती है।
११८९. पूरे घड़े में तो विष है, केवल उसके मुख भाग में दूध है।
११९०. कल का काम आज करो।
११९१. कान या पूँछ काट देने पर भी कुत्ता तो कुत्ता ही रह जाता है घोड़ा या गदहा नहीं बन जाता।
११९२. बलवान् के लिए सब कुछ पथ्य ही है।
११९३. रोका नहीं तो मान ही लिया।
११९४. एक ओर बाघ और दूसरी ओर प्रपात।
११९५. कहाँ ऊँट और कहाँ नीराजना।
११९६. एक लगाये सहस्र-गुना पाये।

११९७. बड़े दर्पण में बड़ा मुँह, वही कनीनिका में छोटा होता है।

११९८. मुनिर्मनुते मूर्खो मुच्यते।

११९९. अस्त्रमस्त्रेण शाम्यति।

१२००. सर्वं सुखं स्वस्मिन्नेव वर्तते।

१२०१. परिग्रह एव संसृतिमोक्षयोरन्तरम्।

---

११९८. मुनि ध्यान लगाये, मूर्ख मुक्ति पाये।

११९९. अस्त्र को अस्त्र ही शान्त करता है।

१२००. अपने में ही सभी सुख है।

१२०१. परिग्रह ही मोक्ष और आवागमन के बीच का पहाड़ है।

# कविप्रशंसा

## व्यासः

१२०२. नमः सर्वविदे तस्मै व्यासाय कविवेधसे।
चक्रे पुण्यं सरस्वत्या यो वर्षमिव भारतम्॥

१२०३. श्रवणाञ्जलिपुटपेयं विरचितवान् भारताख्यममृतं यः।
तमहमरागमतृष्णं कृष्णद्वैपायनं वन्दे॥

१२०४. अभ्रश्यामः पिङ्गजटाबद्धकलापः
प्रांशुर्दण्डी कृष्णमृगत्वक्परिधानः।
साक्षाल्लोकान् पावयमानः कविमुख्यः
पाराशर्यः पर्वसुरूपं विवृणोतु॥

## वाल्मीकिः

१२०५. वाल्मीकि-कविसिंहस्य कविता वनचारिणः।
शृण्वन् रामकथानादं को न याति परं पदम्॥

---

१२०२. उस सर्वज्ञ कवि-ब्रह्म व्यास को नमस्कार, जिसने भारत को अपनी वाणी से वैसे ही पुण्यशाली बना दिया, जैसे ब्रह्मा ने सरस्वती से।

१२०३. जिसने महाभारत रूपी अमृत को श्रवणाञ्जलि से पीने योग्य बनाया, उस राग और तृष्णा से रहित कृष्णद्वैपायन की वन्दना करता हूँ।

१२०४. बादल के समान नीले, पीली जटाओं की बद्ध शिखावाले, ऊँचे, दण्डी, कृष्ण मृगचर्म धारण करनेवाले, श्रेष्ठ कवि, लोकों को सीधे पवित्र कर देनेवाले व्यास महाभारतीय कथा का विस्तार करें।

१२०५. वन में विचरण करनेवाले कविसिंह वाल्मीकि की रामकथा के गायन को सुनता हुआ कौन परम पद को नहीं प्राप्त कर लेता?

१२०६. योगीन्द्रश्छन्दसां स्रष्टा रामायणमहाकविः।
वल्मीकजन्मा जयति प्राच्यः प्राचेतसो मुनिः॥
१२०७. लौकिकानां हि साधूनामर्थं वागनुवर्तते।
ऋषीणां पुनराद्यानां वाचमर्थोऽनुधावति॥
१२०८. आदिकवी चतुरास्यौ कमलजवल्मीकजौ वन्दे।
लोकश्लोकविधात्रोर्ययोर्भिदा लेशमात्रेण॥
१२०९. विहितघनालङ्कारं विचित्रवर्णावलीमयस्फुरणम्।
शक्रायुधमिव वक्रं वल्मीकि-भुवं वन्दे॥
१२१०. कूजन्तं राम-रामेति मधुरं मधुराक्षरम्।
आरुह्य कविताशाखां वन्दे वाल्मीकि-कोकिलम्॥

---

१२०६. योगीन्द्र, छंदों के निर्माता, रामायण के कवि वाल्मीकि प्राच्य-प्राचेतस मुनि विजयी हों।

१२०७. लौकिक साधुओं की वाणी अर्थ का अनुसरण करती है अर्थात जैसा होना होता है, वैसा वे पहले से ही वता देते हैं। किन्तु आदिकवि की वाणी का अनुसरण अर्थ करता है। अर्थात् जैसा वे कह देते हैं, वैसा होकर रहता है।

१२०८. आदि कवि और ब्रह्मा क्रमशः कमल और वल्मीक से उत्पन्न हुए। इनकी वन्दना करता हूँ। इन दोनों में अन्तर थोड़ा ही है—एक ने लोक बनाये और दूसरे ने श्लोक।

१२०९. घने अलंकार से प्रतिष्ठित, विचित्र वर्णों के प्रयोग से चमत्कारपूर्ण श्रेष्ठ वाल्मीकि की वन्दना करता हूँ। वे उस इन्द्र-धनुष के समान हैं, जो बादलों से अलंकृत होता है और चित्र-विचित्र रंगों की राशि से स्फुरणशील होता है।

१२१०. राम-राम इस प्रकार मधुर अक्षरों का मीठा कूजन करनेवाले कविता-शाखा पर आरूढ वाल्मीकि-रूपी कोकिल की वन्दना करता हूँ।

## भासः

१२११. नाटकाविष्क्रियाकारी नानाकौतुकदर्शकः
गद्य-पद्य-निबन्धश्रीः भासा भासस्य भासते ॥

१२१२. भास-नाटकचक्रेऽपिच्छेकैः क्षिप्ते परीक्षितुम् ।
स्वप्नवासवदत्तस्य दाहकोऽभून्न पावकः ॥

१२१३. सूत्रधारकृतारम्भैर्नाटकैर्बहुभूमिकैः ।
सपताकैर्यशोलेभे भासो देवकुलैरिव ॥

१२१४. भासो हासः कविकुलगुरुः कालिदासो विलासः ।
केषां नैषा कथय कविता-कामिनी कौतुकाय ॥

१२१५. सुविभक्तमुखाद्यङ्गैर्व्यक्त-लक्षणवृत्तिभिः ।
परेतोऽपि स्थितो भासः शरीरैरिव नाटकैः ॥

---

१२११. भास नाटक के आविष्कारक हैं और वहुविध कौतुकों को दरसानेवाले हैं। गद्य और पद्य रचना की शोभा भास की चमक से खिल उठी है।

१२१२. कुशल आलोचकों के द्वारा भास के नाटक-समुदाय की परीक्षा करने के लिए डाले जाने पर अग्नि ने भी स्वप्न वासवदत्ता को नहीं जलाया

१२१३. भास के नाटक का समारम्भ सूत्रधार से होता है, उनकी भूमिकायें बड़ी हैं, उनमें पताका का प्रयोग हुआ है ऐसे नाटकों से भास को वैसे ही सुयश प्राप्त हुआ, जैसे देवकुल (मन्दिरों) के द्वारा, जिनका आरम्भ सूत्रधार (स्थपति) करता है, जिनकी भूमिका (आधार-भूमि) विशाल होती है और जिनमें पतकायें लगी होती हैं।

१२१४. जिस कवितारूपी रमणी के भास हास हैं, कविकुल-गुरु कालिदास विलास हैं, वह किनके हृदय में आनन्द नहीं उत्पन्न करेगी ?

१२१५. मुखादि संधियोंमें विभक्त, कैशिकी आदि वृत्तियों से प्रस्फुटित नाटकों के द्वारा मृत भास वैसे ही वर्तमान हैं जैसे अपने शरीर से, जिसमें मुखादि अंग होते हैं और शोभन लक्षणवाली वृत्तियाँ होती हैं।

## कालिदासः

१२१६. वाल्मीकिमिव सभासं यशःशरीरेण सर्वदा सन्तम्।
रसवद्वचनविकासं नमत कविं कालिदासं तम्॥
१२१७. निर्गतामलवाक्यस्य कालिदासस्य सूक्तिषु।
प्रीतिर्मधुरसार्द्रासु मञ्जरीष्विव जायते॥
१२१८. पुरा कवीनां गणना-प्रसङ्गे कनिष्ठिकाधिष्ठितकालिदासः।
अद्यापि तत्तुल्यकवेरभावादनामिका सार्थवती बभूव॥
१२१९. कालिदास-गिरां सारं कालिदासः सरस्वती।
चतुर्मुखोऽथवा ब्रह्मा विदुर्नान्ये तु मादृशाः॥
१२२०. ख्यातः कृती सोऽपि च कालिदासः
शुद्धा सुधा स्वादुमती च यस्य।
वाणीमिषाच्चण्डमरीचिगोत्र—
सिन्धोः परंपारमवाप कीर्तिः॥

---

१२१६. उस कविवर कालिदास को नमस्कार, जो वाल्मीकि के समान प्रतिभा-सम्पन्न हैं, अपने यशःशरीर से अमर हैं और रसमयी वाणी का विलास सर्जन करते हैं।
१२१७. निर्मल वाणी-विलासवाले कालिदास की सूक्तियों में वैसा ही आनन्द मिलता है, जैसा मधु-रस से परिप्लुत मंजरी में।
१२१८. पहले कवियों की गणना करते समय छोटी अँगुली पर कालिदास का नाम पड़ा। फिर दूसरी अंगुली पर कौन हो—उस कालिदास के समकक्ष बैठनेवाला कोई दूसरा न होने से कनिष्ठिका के पास-वाली अंगुली का सार्थक नाम आज भी अनामिका है।
१२१९. कालिदास की वाणी के अभिप्राय को कालिदास, सरस्वती और ब्रह्मा ही जान सके हैं। मेरे समान दूसरे पाठक नहीं।
१२२०. धन्य हैं वे महाकवि कालिदास, जिनकी कीर्ति उनकी कविता के समान निर्दोष, अमृत के समान और स्वादिष्ठ है। उनकी वाणी ने सूर्यवंश का वर्णन ही पूरा किया, और कीर्ति ने समुद्र पार करने का काम पूरा किया।

# भारविः

१२२१. जिगाय विस्फूर्तिमती यदीया प्रतिभा रविम्।
सन्महे कविरत्नं तं वयं सम्प्रति भारविम्।।

१२२२. प्रकाशं सर्वतो दिव्यं विदधाना सतां मुदे।
प्रबोधनपरा हृद्या भारवेरिव भारवेः।।

१२२३. प्रदेश-वृत्त्यापि महान्तमर्थं
प्रदर्शयन्ती रसमादधाना।
सा भारवेः सत्पथदीपिकेव
रम्याकृतिः कैरिव नोपजीव्या ।।

१२२४. वृत्तच्छत्रस्य सा काऽपि वंशस्थस्य विचित्रता।
प्रतिभा भारवेर्येन सच्छायेनाधिकीकृता ।।

१२२५. नारिकेलफल सम्मितं वचो भारवेः सपदि तद्विभज्यते।
स्वादयन्तु रसगर्भनिर्भरं सारमस्य रसिका यथेप्सितम् ।।

---

१२२१. जिसकी स्फुरणशील प्रतिभा ने रवि को जीत लिया है, उस कविरत्न को हम भारवि मान बैठे हैं।

१२२२. भारवि की काव्य-चारुता सज्जनों के प्रमोद के लिए सर्वत्र दिव्य प्रकाश करती हुई ज्ञान-प्रदायिनी और मनोरम है, वैसे ही जैसे सूर्य की प्रभा।

१२२३. भारवि की रमणीय रचना थोड़े में ही अतिशय भाव का प्रदर्शन करती हुई रस का आधान करती हुई सन्मार्ग को बतानेवाले दीपक की भाँति है। कौन उसको आदर्श-रूप में नहीं ग्रहण करता ?

१२२४. शोभन छत्र के समान निष्पन्न वंशस्थ छन्द की अनूठी विचित्रता होती है, जिसकी रमणीयता से भारवि की प्रतिभा उसी प्रकार संवर्धित हुई है, जैसे छाते की शोभामयी कान्ति से सूर्य की चमक।

१२२५. भारवि की वाणी नारियल के फल के समान मानी गई है। यदि उसकी व्याख्या हो गई तो वह वैसे ही आभ्यन्तर रस से परिपूर्ण होकर रसिकों के द्वारा आस्वाद्य है, जैसे तोड़ दिये जाने पर नारियल का फल।

१२२६. प्रकृति-मधुरा भारवि-गिरः॥

१२२७. तादात्म्यं भावरसयोर्भारविः स्पष्टमूचिवान्॥

## बाणः

१२२८. हृदिलग्नेन बाणेन यन्मन्दोऽपि पदक्रमः।
भवेत् कवि-कुरङ्गाणां चापलं तत्र कारणम्॥

१२२९. सहर्षचरितारब्धाद्भुतकादम्बरी-कथा।
बाणस्य वाण्यनार्येव स्वच्छन्दा भ्रमति क्षितौ॥

१२३०. जाता शिखण्डिनी प्राग्यथा शिखण्डी तथावगच्छामि।
प्रागल्भ्यमधिकं प्राप्तुं वाणी बाणो बभूवेति॥

---

१२२६. भारवि की वाणी स्वभावतः मधुर है।

१२२७. भारवि ने भाव और रस के तादात्म्य को स्पष्ट ही व्यक्त किया है।

१२२८. जिस प्रकार बाण से बींधे हुए मर्म स्थलवाले हरिण धीरे-धीरे चलते ही रहते हैं, वैसे ही हृदय में महाकवि बाण के आसक्त होने पर भी कवि कुछ-कुछ पद्य रचना करते ही रहते हैं, इसमें हरिणों की भाँति कवियों की चपलता ही कारण है।

१२२९. हर्षचरित से आरम्भ हुई, अद्भुत कादम्बरी-कथा से भूषित बाण की वाणी असती रमणी की भाँति स्वच्छन्दता से पृथ्वी-भ्रमण करती है।

१२३०. पहले जैसे शिखण्डिनी शिखण्डी हो गई, वैसे ही मैं समझता हूँ, वाणी बाण हो गई, जिससे अधिक प्रगल्भता प्राप्त कर सके।

१२३१. श्लेषे केचन शब्दगुम्फविषये केचिद्रसे चापरे-
ऽलङ्कारे कतिचित् सदर्थ-विषये चान्ये कथा-वर्णने ॥
आः सर्वत्र गभीरधीरकविता विन्ध्याटवी-चातुरी
संचारी कविकुम्भिकुम्भभिदुरोबाणस्तुपञ्चाननः ॥

१२३२. वीणा-पाणि परामृष्टवीणानिक्वाण-हारिणीम् ।
भावयन्ति कथं वान्ये भट्टबाणस्य भारतीम् ॥

१२३३. रुचिर-स्वरवर्णपदा रसभाववती जगन्मनो हरति ।
तत् किं तरुणी ? नहि नहि वाणी बाणस्य मधुरशीलस्य ॥

१२३४. वागीश्वरं हन्त भजेऽभिनन्द--
मर्थेश्वरं वाक्पतिराजमीडे ।
रसेश्वरं स्तौमि च कालिदासं
बाणं तु सर्वेश्वरमानतोऽस्मि ॥

---

१२३१. कुछ कवि श्लेष, कुछ शब्द-विन्यास, कुछ रस, कुछ अलंकार, कोई अच्छे अभिप्रायवाली बातों में और कुछ कथा-वर्णन में दक्ष हैं। केवल कवि-सिंह बाण है, जो कविरूपी हाथी के मस्तक को छिन्न-भिन्न करके सर्वत्र गम्भीर-धीर कवितारूपी विन्ध्य-वन-कौशल में संचरण करनेवाला है।

१२३२. सरस्वती के हाथ से निनादित वीणा के गान-माधुर्य से बढ़कर भट्ट बाण की भारती को कैसे अन्य रसिक समझ सकते हैं ?

१२३३. रुचिर स्वर, वर्ण और पदवाली, रस और भाव से समायुक्त (वह) संसार के लोगों का मन हरती है। तो वह क्या कोई स्त्री है ? नहीं, नहीं माधुर्यगुण-प्रवण बाण की वह वाणी है।

१२३४. मैं वागीश्वर कवि अभिनन्द का अभिनन्दन करता हूँ, अर्थेश्वर कवि वाक्पतिराज की स्तुति करता हूँ, और रसेश्वर कवि कालिदास की प्रशस्ति करता हूँ। प्रणाम करता हूँ, सर्वेश्वर कवि बाण को।

१२३५. प्रतिकविभेदन-बाणः कवितातरुगहनविहरण-मयूरः।
सहृदयलोकसुबन्धुर्जयति श्रीभट्टबाण-कविराजः॥

१२३६. बाणं, सत्कवि-गीर्वाणमनुबन्धाति कः कविः।
सिन्धुमन्धुः किमन्वेति द्युमणिं कतमो मणिः॥

१२३७. दण्डीत्युपस्थिते सद्यः कवीनां कम्पितं मनः।
प्रविष्टे त्वन्तरं बाणे कण्ठे वागेव रुध्यते॥

१२३८. हेम्नो भारशतानि वा मदमुचां वृन्दानि वा दन्तिनां
श्रीहर्षेण समर्पितानि कवये बाणाय कुत्राद्य तत्॥
या बाणेन तु तस्य सूक्तिनिकरैरुट्टंकिता कीर्तय-
स्ताः कल्पप्रलयेऽपि यान्ति न मनाङ्‌ मन्ये परिम्लानताम्॥

१२३९. केवलोऽपि स्फुरन् बाणः करोति विमदान् कवीन्
किं पुनः क्लृप्तसन्धान-पुलिन्द-कृत-सन्निधिः॥

---

१२३५. प्रतिस्पर्धा करने वाले कवि को परास्त करने में बाण के समान, काव्यारण्य में विहरण करने में मयूर के समान, रसिक लोगों के सुबन्धु वे भट्ट बाण कविराज विजयी हों।

१२३६ सत्कवियों में देवता उस बाण के आस-पास तक कौन कवि पहुँचता है? क्या कुआँ समुद्र की अथवा मणि सूर्य की समता करता है?

१२३७. कवि दण्डी के उपस्थित होने पर तत्काल कवियों का मन वैसे ही काँपता है जैसे जलधर को देखकर। बाण के भीतर प्रवेश करने पर तो वाणी कण्ठ में ही रुक जाती है।

१२३८. सोने के सैकड़ों भार और मदस्रावी हाथियों के वृन्द श्रीहर्ष ने कवि बाण के लिए समर्पित किये। वह सब अब कहाँ हैं? बाण ने सूक्ति-राशियों से जो हर्ष की कीर्ति उट्टङ्कित की वह कल्पान्त तक तनिक भी परिम्लान नहीं होगी।

१२३९. स्फुरणशील बाण अकेले ही कवियों का मद दूर कर देता है। जब शर-सन्धान में निपुण पुलिन्द का साहचर्य हो तो फिर क्या कहना?

## माघः

१२४०. उपमा कालिदासस्य भारवेरर्थगौरवम्।
दण्डिनः पदलालित्यं माघे सन्ति त्रयोगुणाः॥

१२४१. कविता-कुन्द-विकासन-कृतिने विजित-जनताऽनिदाघाय।
दलितोद्दामाघाय प्रणतिं कलयामि माघाय॥

१२४२. माघो माघ इवाशेषं क्षमः कम्पयितुं जगत्।
श्लेषामोदभरं चापि सम्भावयितुमीश्वरः॥

१२४३. कृत्स्नप्रबोधकृद् वाणी भारवेरिव भारवेः।
माघेनेव च माघेन कम्पः कस्य न जायते॥

१२४४. माघेन विघ्नितोत्साहा नोत्सहन्ते पदक्रमे।
स्मरन्तो भारवेरेव कवयः कपयो यथा॥

---

१२४०. कालिदास की उपमा, भारवि का अर्थगौरव, दण्डी का पद-लालित्य ये तीनों ही गुण माघ में हैं।

१२४१. कवितारूपी कुन्द-पुष्प का सर्वोत्तम विकास करनेवाले, जनता के सन्ताप को मिटा देनेवाले और उच्छृंखल पाप का शमन करनेवाले माघ (कवि, मास) को प्रणाम करता हूँ।

१२४२. माघ कवि माघ मास की भाँति सारे संसार को कँपा देने में समर्थ हैं। ये दोनों संसार को संश्लिष्ट और आनन्दमय बना देने में भी समर्थ हैं।

१२४३. सूर्य की प्रभा के समान भारवि की वाणी सर्वज्ञता प्रदान करती है। माघ मास की भाँति माघ कवि से किसको कम्पन नहीं उत्पन्न होता?

१२४४. जिस प्रकार माघ मास की ठंडक से पीड़ित वानर दुबक कर बैठ रहते हैं और केवल सूर्य की प्रभा का ध्यान मात्र करते हैं, उसी प्रकार कवि लोग माघ कवि की प्रतिभा के कारण उत्साह छोड़कर पद रचना करने से विरत हो जाते हैं और भारवि का केवल ध्यान करते हैं।

१२४५. तावद् भा भारवेर्भाति यावन्माघस्य नोदयः।
उदिते च पुनर्माघे भारवेर्भा रवेरिव॥

१२४६. माघे मेघे गतं वयः।

१२४७. नवसर्गगते माघे नवशब्दो न विद्यते।

## भवभूतिः

१२४८. भव्यां यदि विभूतिं त्वं तात कामयसे तदा।
भवभूतिपदे चित्तमविलम्बं निवेशय॥

१२४९. सुकविद्वितयं मन्ये निखिलेऽपि महीतले।
भवभूतिः शुकश्चायं वाल्मीकिस्तु तृतीयकः॥

---

१२४५. सूर्य की किरणें तभी तक प्रभान्वित रहती हैं, जब तक माघ मास नहीं आता। वैसे ही भारवि की प्रतिभा तभी तक समादरणीय रही, जब तक माघ का उदय नहीं हुआ। जिस प्रकार माघ मास में सूर्य की किरणें हतप्रभ होती हैं, वैसे ही माघ कवि के उदय होने पर भारवि हतप्रभ हैं।

१२४६. शिशुपाल-वध और मेघदूत के पढ़ते-पढ़ते आयु बीत गई।

१२४७. शिशुपाल-वध का नव सर्ग पढ़ा लिया तो फिर नये शब्द (साहित्य) में न मिलेंगे।

१२४८. यदि आप शोभन ऐश्वर्य की कामना करते हैं तो तत्काल ही कविवर भवभूति के काव्य-पदों का ध्यान करें अथवा शिव का ध्यान करें।

१२४९. पूरे जगत् में दो ही सुकवि हैं—भवभूति और शुकदेव। तीसरे स्थान पर वाल्मीकि आते हैं।

१२५०. भवभूतेः सम्बन्धाद् भूधरभूरेव भारती भाति।
एतत्कृत-कारुण्ये किमन्यथा रोदिति ग्रावा॥

१२५१. स्पष्टभावरसा चित्रैः पादन्यासैः प्रवर्तिता।
नाटकेषु नटस्त्रीव भारती भवभूतिना॥

१२५२. भवभूतेः शिखरिणी निरर्गलतरङ्गिणी।
रुचिरा घनसन्दर्भे या मयूरीव नृत्यति॥

१२५३. मान्यो जगत्यां भवभूतिरार्यः सारस्वते वर्त्मनि सार्थवाहः।
वाचं पताकामिव यस्य दृष्ट्वा जनः कवीनामनुपृष्ठमेति॥

१२५४. उत्तरे रामचरिते भवभूतिर्विशिष्यते॥

---

१२५०. भवभूति का सम्बन्ध होने से भारती (वाणी) पर्वतप्रस्थ की भाँति सुशोभित होती है। अन्यथा भारती के द्वारा कारुण्य की अभिव्यक्ति किये जाने पर पत्थर क्यों रोने लगते?

१२५१. भवभूति के द्वारा नाटकों में स्पष्ट भाव-रसमयी वाणी चित्र-विचित्र पदों के प्रयोग से वैसे ही संचारित की गई है, जैसे नटी भाव और रसों से सम्पन्न होकर अपने विचित्र पद-संचार से मन मोह लेती है।

१२५२. भवभूति की रमणीय शिखरिणी (छंद) महत्त्वपूर्ण प्रसंगों के वर्णन में मयूरी की भाँति नाच उठती है, जैसे अजस्र स्रोतस्विनी बादलों के बरसने पर।

१२५३. सारस्वत मार्ग पर जगत् में भवभूति सम्मानित सार्थवाह हैं, जिसकी वाणीरूपी पताका को देखकर कवि-लोक पीछे-पीछे चलता है।

१२५४. उत्तररामचरित में भवभूति सर्वोत्तम है।

## श्रीहर्षः

१२५५. ताम्बूलद्वयमासनं च लभते यः कान्यकुब्जेश्वरात्
यः साक्षात् कुरुते समाधिषु परं ब्रह्मप्रमोदार्णवम्।
यत्काव्यं मधुवर्षि धर्षितपरास्तर्केषु यस्योक्तयः
श्रीश्रीहर्षकवेः कृतिः कृतिमुदे तस्याभ्युदीयादियम्॥

१२५६. कविषु दधतमुत्कर्षं विस्फुरदनवद्यहृद्य-वाग्वर्षम्।
इह खलु खलप्रधर्षं श्री हर्षं नौमि हर्षसंघर्षम्॥

१२५७. अमोघ-चिन्तामणि-मन्त्रसिद्धि-प्राप्तप्रभावं प्रथितप्रतापम्।
समस्तशास्त्रप्रतिबुद्धविद्यं श्रीहर्षमेकं विबुधं प्रतीमः॥

१२५८. नैषधं विद्वदौषधम्॥

---

१२५५. जो कान्यकुब्ज देश के राजा से पान का बीड़ा और आसन प्राप्त करते थे, जो समाधि लगा लेने पर ब्रह्ममय आनन्द-सागर की अनुभूति करते थे, जिसका काव्य माधुर्य की वर्षा करता है, जिसकी उक्तियाँ तर्क के समय प्रतिवादी को परास्त कर ही देती हैं, उस श्रीहर्ष कवि की यह कृति विद्वानों को आनन्द प्रदान करने के लिए समुदित हो।

१२५६. मैं उस श्रीहर्ष महाकवि को प्रणाम करता हूँ, जो कवियों की श्रेणी में सर्वोत्कृष्ट है, जिनकी काव्य-रचना स्पन्दनशील, निर्दोष और मनोरम है तथा जो दुष्टों का प्रधर्षण करने वाले हैं।

१२५७. मैं तो केवल श्रीहर्ष को ही विद्वान् मानता हूँ, जिनका अमोघ चिन्तामणि मंत्र की सिद्धि से प्राप्त प्रभाव से युक्त प्रताप विख्यात है और जिन्होंने सभी शास्त्रों की विद्याओं का रहस्य जान लिया है।

१२५८. नैषधीयचरित विद्वानों का औषध है।

## पण्डितराज-जगन्नाथः

१२५९. जगन्नाथो जगन्नाथो भारतीरतिदैवतम्।
यत्पदोपासना सद्यो विधत्ते परमां मुदम्॥

१२६०. कवयति पण्डितराजे कवयन्त्यन्येऽपि विद्वांसः।
नृत्यति पिनाकपाणौ नृत्यन्त्यन्येऽपि भूतवेतालाः॥

१२६१. माधुर्यैरपि धुर्यैर्द्राक्षाक्षीरेक्षुमाक्षिकादीनाम्।
वन्ध्यैव माधुरीयं पण्डितराजस्य कवितायाः॥

१२६२. गिरां देवी वीणागुणरणनहीनादरकरा
यदीयानां वाचाममृतमयमाचामति रसम्।
वचस्तस्याकर्ण्य श्रवणसुभगं पण्डितपते-
रधुन्वन्मूर्धानं नृपशुरथवायं पशुपतिः॥

---

१२५९. जगन्नाथ तो जगन्नाथ ही हैं—वाणी-विलास के देवता। इनके पदों की उपासना तत्काल सर्वोच्च आनन्द की प्राप्ति कराती है।

१२६०. पण्डितराज कविता करते हैं और अन्य विद्वान् भी कविता करते हैं। क्यों न करें? शिव के नृत्य करते समय अन्य भूत-वेताल भी तो नाचते हैं।

१२६१. अंगूर, ईख और शहद की उच्चकोटि की मिठास भी पण्डितराज की सर्वोत्कृष्ट माधुरी की तुलना में व्यर्थ है।

१२६२. सरस्वती वीणा के तारों से हाथ हटाकर जिसकी वाणी के अमृतमय रस का आचमन करती है, उस पण्डितराजकी श्रोत्र मधुर वाणी को सुनकर सिर को न धुननेवाले दो ही हैं—नृपशु (मनुष्यों में पशु) और पशुपति (शिव)।

## विषय-सन्दर्भ

## कविप्रशंसा